पार्श्वतो मल्लिनाथस्य चकाशे चामरद्वयम् ।
धर्मशुक्लाभिधध्यानयुग्मं मूर्तमिवाऽमलम् ॥ २३८ ॥
वादित्राणां महाघोषैर्व्यानशे सकला दिशः ।
अधर्मवार्ता सर्वत्र सर्वतस्तिरयन्निव ॥ २३९ ॥
वृन्दारकाणां वृन्देभ्यः स्पष्टो जयजयारवः ।
उत्तस्थे मोहराजस्य प्रवासपटहोपमः ॥ २४० ॥
क्षणमग्रे क्षणं पृष्ठे पौरास्तस्थुः प्रमोदतः ।
स्वामिनो विरहं सोढुमप्रौढा इव सर्वतः ॥ २४१ ॥
केऽप्यारुरुहुरट्टाग्रं सौधाग्राणि च केचन ।
सन्मञ्चाग्राणि केचिच्च प्रभोर्दर्शनकाम्यया ॥ २४२ ॥
हस्त्यश्वरथपादातपौरवृन्दपरावृतः ।
श्रीमत्कुम्भमहीपालश्चचाल जिनपृष्ठतः ॥ २४३ ॥
करिणीपृष्ठविन्यस्तमञ्चिकासनमासिता ।
प्रभावत्यपि गोत्रस्त्रीसंहत्या पर्यलङ्कृता ॥ २४४ ॥
स्वामिदीक्षाश्रुतेरुत्कैः प्रवित्रजिषुभिः समम् ।
राजभिस्त्रिशतीसंख्यैः सहर्षैरग्रतः स्थितैः ॥ २४५ ॥
स्त्रीणामप्यान्तरपरीवाराणां च त्रिभिः शतैः ।
दिदृक्षुभिः परं पौरैरुत्सवं समुपागतैः ॥ २४६ ॥
पूर्णपार्श्वो जगन्नाथो मिथिलामध्यवर्त्मना ।
वधूपाणिमिवादातुं दीक्षामुत्को वरो यथा ॥ २४७ ॥
शिबिकावाहिनस्तत्र दिव्याभरणभासुराः ।
अदधुर्भूगतानेकाश्विनीनन्दनवैभवम् ॥ २४८ ॥
तदा श्रीमल्लिनाथस्य तस्मिन्निष्क्रमणोत्सवे ।
गतक्षूणो दिदृक्षूणां क्षोभः स्त्रीणां क्षणादभूत् ॥२४९॥
अर्धप्रोतस्फुरत्काञ्च्या प्रस्खलन्त्यः पदे पदे ।
तुङ्गजालकमध्यासुः काश्चित् स्वामिदिदृक्षया ॥२५०॥
काश्चिद् देशान्तरायातप्रियवार्ता अपास्य ताः ।

स्वामिदीक्षोत्सवं द्रष्टुं चेलुश्चपललोचनाः ॥ २५१ ॥
काश्चिदिभ्याङ्गनाः पौत्रजन्म श्रुत्वाऽपि पावनम् ।
न दत्त्वा हर्षदानान्यथावन्तोद्दामवल्गितम् ॥२५२॥
चेलाञ्चलांश्चलद्दृशश्चञ्चच्चामरवैभवात् ।
काश्चिच्च चालयामासुश्चलहावचपुर्लताः ॥ २५३ ॥
पुण्याङ्कुरानिवाऽमोघान् लाजान् काश्चन चिक्षिपुः ।
काश्चन तन्दुलान्मौलौ शुक्लध्यानलवानिव ॥ २५४ ॥
शीतांशुकरमित्राणि पूर्णपात्राणि काश्चन ।
विदधुः कराजीवे यशांसीव जगद्गुरोः ॥ २५५ ॥
स्वाम्यङ्कपूर्णकुम्भस्य स्पर्धिनः काश्चिदङ्गनाः ।
पूर्णकुम्भान् करक्रोडे दधुः श्रेयःफलोपमान् ॥२५६॥
तत्र काश्चित् प्रनृत्यन्ति जातपुत्रोत्सवा इव ।
गोत्रवृद्धा इव जगुर्मङ्गलान्यपि काश्चन ॥ २५७ ॥
सुरेन्द्राणां चतुःषष्टिनाट्यानीकैः प्रभोः पुरः ।
नाट्यानि चक्रिरे व्योम्नि गन्धर्वनगराणि वा ॥२५८॥
मर्त्यैरमर्त्यैः पातालवासिभिस्तैरुपागतैः ।
एकत्रैव कृतवती त्रिलोकी कौतुकादिव ॥ २५९ ॥
मिथिलामण्डनं राजगन्धर्वा नवगीतिभिः ।
अगायंस्त्रिजगन्नाथगुणग्रामाननेकधा ॥ २६० ॥
इभ्यसामन्तवर्गाणां संमर्दाद् गलितच्युतैः ।
हारै रचितपूजेव पूरभूत् सर्वतोमुखी ॥ २६१ ॥
निर्ममोऽपि जगन्नाथो मङ्गलानि पदे पदे ।
प्रतीयेषाऽनुचराणां सेवास्थितिविदो जिनाः ॥२६२॥
कांश्चिन्नमस्यतो देवानाकाशे भुवनाधिपः ।
कृतार्थान् विदधे स्मेरनयनाम्भोजवीक्षणैः ॥ २६३ ॥
एवं सुरासुरनरैः क्रियमाणमहोत्सवः ।
पुरीगोपुरमुल्लङ्घ्य भववासनिवासवत् ॥ २६४ ॥

कुमुदामोदसंमत्तरोलम्बरवडम्बरैः ।
अर्थैरिव महाकाव्यं सूचितस्मरकेतकैः ॥ २६५ ॥
एलालवङ्गकक्कोलनागरङ्गादिभूरुहैः ।
सदाशापस्रुतैः पूर्णमिव साधुमनोरथैः ॥ २६६ ॥
अभ्रंलिहानोकहेषु बद्धदोलं कुमारकैः ।
मुखासवाद्यैः पौरीभिः पूर्यमाणद्रुदोहदम् ॥ २६७ ॥
चाल्यमानलताचक्रं क्रीडया पौरबालकैः ।
उच्चीयमानसुमनोमालिनीभिः कराम्बुजैः ॥ २६८ ॥
मञ्जुगुञ्जत्पिकीनादैराह्वदिव जगद्गुरुम् ।
महोद्यानमथ प्राप श्रीमन्मल्लिजिनेश्वरः ॥ २६९ ॥
अथाग्र्याच्छिबिकारत्नात्पोतादिव महाभुजः ।
उत्ततार स्वबाहुभ्यां तरीतुं भववारिधिम् ॥ २७० ॥
उज्झाञ्चकार निःशेषं नेपथ्यादि जगद्गुरुः ।
निर्मोकमिव नागेन्द्रो मिथ्यात्वमिव तत्त्ववित् ॥२७१॥
अदूष्यं देवदूष्यं स्वाराजस्त्रिजगदीशितुः ।
स्कन्धे चिक्षेप सुज्ञानाऽग्रयानमिव मूर्तिमत् ॥२७२॥
पञ्चविंशतिधन्वोच्चः कृतषष्ठमहातपाः ।
मार्गशुक्लस्यैकादश्याः पूर्वाह्णे भेऽश्वयुज्यथ ॥ २७३ ॥
श्रीमन्मल्लिजिनाधीशः पञ्चभिर्मुष्टिभिः स्वयम् ।
केशानुत्पाटयामास मूर्तिमद्विपयानिव ॥ २७४ ॥
प्रत्यैच्छत् त्रिदशाधीशः स्वामिदत्तप्रसादवत् ।
अब्दमुक्तोम्बुवत् पृथ्वी निजचेलाञ्चलेन सः ॥२७५॥
अद्रिभित्स्वामिनः केशान् कज्जलश्यामलश्रियः ।
प्राक्षिपत् क्षीरपाथोधौ निर्मलीकरणाय वा ॥२७६॥
वेगात् तत्रैत्य सद्भक्तिरूर्ध्वीकृतकरद्वयः ।
तुमुलं वारयामास वासवो नटवद् नृणाम् ॥२७७॥
उक्त्वा सिद्धनमस्कारं सामायिकमथोच्चरन् ।

चारित्रं जगृहे स्वामी मुक्तिसंवननौषधम् ॥२७८॥
मनःपर्यायसंज्ञं च ज्ञानं भर्तुरभूत् तदा ।
केवलज्ञानलाभस्य सत्यङ्कार इवानघः ॥ २७९ ॥
नारकाणामपि सुखमाकस्मिकमजायत ।
सौदामिन्या इव द्योतः क्षणं च नरकेऽजनि ॥२८०॥
त्रिशतीप्रमिता भूपास्त्रिशतीप्रमिताः स्त्रियः ।
संवेगाम्भःकृतस्नानाः प्राव्रजन्ननु तीर्थपम् ॥२८१॥
ततः प्रदक्षिणीकृत्य श्रीमल्लिस्वामिनं जिनम् ।
वाचा पीयूषहारिण्याऽऽरेभे स्तोतुं पुरन्दरः ॥२८२॥
नमो मल्लिजिनेशाय कुमारब्रह्मचारिणे ।
वैराग्यद्रुपयोदाय क्लेशावेशाग्निवारिणे ॥२८३॥
कर्मभिस्त्वमसंस्पृष्टः पद्मपत्रमिवोदकैः ।
तव संसारवासोऽपि मुक्तिवास इवाऽजनि ॥ २८४ ॥
मैत्र्यादिवासनापूतं दूतं शाश्वतशर्मणि ।
नाऽभिभूतं मदेनापि स्मरामि तव शासनम् ॥२८५॥
स्वामिन् ! विश्वोपकाराय तपस्यां प्राप्तवानसि ।
मार्गद्रुः पान्थसार्थाय फलैः फलति पेशलैः ॥२८६॥
त्वज्जितस्त्रिजगन्नाथाऽनङ्गत्वं दधते स्मरः ।
दग्धो दुग्धेन यो लोके स फूत्कृत्य पयः पिबेत्॥२८७॥
इत्थं जगत्पतिं स्तुत्वा भक्तिप्रह्वः पुरन्दरः ।
अनुनाथं धरापीठं त्रिर्नमो विदधेतराम् ॥ २८८ ॥
अथ च्छत्रायमाणस्याऽशोकद्रोः प्रवरे तले ।
अतिष्ठत् प्रतिमायां श्रीजिनो लम्बिभुजद्वयः ॥२८९॥
अप्रमत्तः संयतादिगुणस्थानानि तत्क्षणम् ।
आश्रित्य घातिकर्माणि पुप्लोष ध्यानपावके॥२९०॥
तस्मिन्नेव क्षणे विश्वभर्तुर्विश्वप्रकाशकम् ।
उत्पेदे केवलज्ञानं सर्वपर्यायतत्त्ववित् ॥ २९१ ॥

अथ क्षणात् सहस्राक्षः प्रयुक्तावधिना स्वयम् ।
उत्पन्नं केवलज्ञानमज्ञासीदुक्तवत् तदा ॥ २९२ ॥
अथानिन्युर्हरेराज्ञाविधेर्वायुकुमारकाः ।
योजनप्रमिते क्षेत्रे तृणकाष्ठादि विस्तृतम् ॥ २९३ ॥
तत्र गन्धाम्बुभिः शुद्धस्वातिज्योतिर्भवामिव ।
रजःपुञ्जप्रशमनीं वृष्टिं चक्रुर्दिवौकसः ॥ २९४ ॥
स्वर्णरत्नशिलाजालैस्तूद्धवन्धुर्महीतलम् ।
सुरास्तत्र भृतैश्चैत्यमध्यवद् मेध्यबुद्धयः ॥ २९५ ॥
जानुदघ्नीं पञ्चवर्णामामोदाद् मत्तषट्पदाम् ।
विकूणिकां कूणयन्तीं वृष्टिं पौष्पीं व्यधुः सुराः ॥२९६॥
कृत्वाऽन्तर्मणिमयस्तूपमभितस्तमधः सुराः ।
रैकपिशीर्षकं वप्रं व्यधुर्भुवनवासिनः ॥ २९७ ॥
ज्योतिष्कास्तद् द्वितीयं तु सद्रत्नकपिशीर्षकम् ।
चक्रिरे काञ्चनैः सूर्यरश्मिभिरिव पिण्डितम् ॥२९८॥
रत्नैः प्राकारमुत्तुङ्गं रोहणाद्रेर्हृतैरिव ।
सुरा वैमानिकाश्चक्रुर्माणिक्यकपिशीर्षकम् ॥२९९॥
वप्रं वप्रं प्रति कृता प्रतोलीनां चतुष्टयी ।
चतुर्दिगन्तलोकानामाह्वातुमिव दूतिकाः ॥३००॥
उपरिष्टात् प्रतोलीनां तोरणानि चकाशिरे ।
विलोकितुं दिगन्तानि स्थितानीवोर्ध्वमम्बरे ॥३०१॥
मुखन्यस्ताम्बुजाः पूर्णकलशास्तोरणास्थिताः ।
रेजिरे मोहसंतप्तान् भव्यान् सेक्तुमिवोद्यताः ॥३०२॥
प्रतोलीनां पुरो दिव्या वाप्यः सौवर्णपङ्कजाः ।
क्रीडार्थमिव कैवल्यलक्ष्म्या इव सुदीर्घिकाः ॥३०३॥
प्रतिद्वारं धूपघट्यः स्फुरद्धूपाः पदे पदे ।
विपदंशविनाशाय निर्मितास्त्रिदशेश्वरैः ॥३०४॥
देवच्छन्दं जगद्भर्तुर्विश्रामाय दिवौकसः ।

प्राकारे मध्यमे चक्रुः पूर्वोदीच्यां यथास्थिति ॥३०५॥
धनुःशतत्रयं प्रांशुं चैत्यद्रुं पत्रलं ततम् ।
तृतीयशालमध्योर्व्यां विदधुर्व्यन्तरामराः ॥३०६॥
( युग्मम् )

ततः सिंहासनं दिव्यं चारुणी चामरे अपि ।
त्रैलोक्यविभुताशंसि शुभ्रं छत्रत्रयं सुराः ॥३०७॥
सर्वाश्चर्यैरिव कृतं निर्मितं मङ्गलैरिव ।
संकीर्णमिव लक्ष्मीभिर्हर्षैर्मूर्तैरिवावृतम् ॥ ३०८ ॥
जगच्चित्रैरिव व्याप्तं निधानैरिव सेवितुम् ।
चक्रे समवसरणं शरणं पर्वणामिव ॥३०९॥
एकत्र दिव्यरम्भोरुकरताडितदुन्दुभीः ।
एकत्र पञ्चसुग्रामप्रपञ्चस्थिरकिन्नरम् ॥ ३१० ॥
एकत्र लेप्यललनाकरकुम्भगलज्जलम् ।
एकत्र रममाणस्वःकुमारकृतहुंकृति ॥ ३११ ॥
एकत्र स्वर्वधूलोकहल्लीसककृतोत्सवम् ।
एकत्र किन्नरीगानदत्तश्रवणकिन्नरम् ॥ ३१२ ॥
( पञ्चभिर्द्वितीयश्लोकमध्यक्रियाकुलकम् )

मुहुः संचार्यमाणेषु लक्ष्मीलीलागृहेष्विव ।
स्वर्णमयेषु पद्मेषु न्यस्य पादौ सुकोमलौ ॥ ३१३ ॥
पुरस्ताद् बन्दिभिरिव त्रिर्जयेति विभाषकैः ।
अमरैर्दर्श्यमानाऽध्वा देवीभिर्गीतमङ्गलः ॥ ३१४ ॥
पूर्वद्वारात् प्रविश्योच्चैश्चैत्यद्रोश्च प्रदक्षिणाम् ।
विदधेऽवश्यकार्याणि जिना अपि वितन्वते ॥ ३१५ ॥
नमस्तीर्थायेति वचो धीरधीरमुदीरयन् ।
दिव्यसिंहासने तस्थौ कुम्भाङ्कः कुम्भभूर्जिनः॥३१६॥
कन्दर्पजयनं नाथ ! त्वां दृष्ट्वाऽशोकपादपः ।
प्रनृत्यति चलैः पत्रैः सलीलमिव पाणिभिः ॥३१७॥

दिव्यध्वनिरसास्वादलुब्धास्त्वत्पादपङ्कजम् ।
तदेकतानहृदयाः सेवन्ते सततं मृगाः ॥ ३१८ ॥
स्यूते इव करैरिन्दोः फेनैरिव करम्बिते ।
तव पार्श्वे जगन्नाथ ! रेजाते चामरे इमे ॥ ३१९ ॥
तव सिंहासनं नाथ ! धत्ते सुरगिरिश्रियम् ।
अप्रकम्प्यं परैः कामं चारुकल्याणभाजनम् ॥ ३२० ॥
भाति भामण्डलं पृष्ठे पिण्डीकृतमहः सुरैः ।
उदयद्द्वादशादित्यतेजःस्तोमविडम्बकम् ॥ ३२१ ॥
श्रीमल्लेर्भुवनाधीशादिति दुन्दुभिवादनम् ।
विधत्ते मोहनीयादिमलिम्लुचपराभवम् ॥ ३२२ ॥
त्रये स्युस्त्रिजगन्नाथ ! जम्बूद्वीपे यदीन्दवः ।
तेनोपमीयते छत्रत्रितयं मूर्ध्नि भासुरम् ॥ ३२३ ॥
स्तुत्वेति विरते शक्रे श्रीकुम्भः पृथिवीपतिः ।
विरचय्याञ्जलीबन्धं स्तुतवानिति भक्तिभाक् ॥ ३२४ ॥
धन्य ईक्ष्वाकुवंशोऽयं प्रसिद्धोऽजनि भारते ।
यस्मिन् भवादृशा जाताः सुवृत्ता मौक्तिकोपमाः ॥ ३२५ ॥
येन स्मरेण तीर्थेश ! कुम्भदासीकृतं जगत् ।
स त्वयोन्मूलितो जीर्णपादप इव वात्यया ॥ ३२६ ॥
स्तुत्वेति सत्यमर्हन्तं श्रीकुम्भो मुदिताशयः ।
अतृप्त इव तीर्थेशवक्त्रराजीवमैक्षत ॥ ३२७ ॥
सांवत्सरिकदानान्तं विज्ञाय स्वपुरीं तदा ।
विहाय षडपि प्राप्ता भूभुजस्ते शमादृताः ॥ ३२८ ॥
स्पृष्ट्वा भूमीतटं मूर्ध्ना योजिताञ्जलयोऽखिलाः ।
एवमारेभिरे स्तोतुं गिरा धीरप्रशान्तया ॥ ३२९ ॥
पूर्वस्मिन् जन्मनि स्वामिन् ! तारकोऽसि यथा भृशम् ।
तदेदानीं विवाहस्य क्षणं देशनयाऽनया ॥ ३३० ॥
भवभीतिभयं नष्टं तव मूर्तिविलोकनात् ।

खेलन्ति कौशिकास्तावद् यावन्नोदेत्यहर्पतिः॥३३१॥

इति विनयविनम्रा भक्तिभाजो नरेन्द्रा-
स्त्रिभुवनगुरुमेनं मल्लिनाथं प्रणम्य ।
मरुदधिपतिपृष्ठे पृष्ठतामादधाना
जिनवचनवितानं श्रोतुमुत्का न्यषीदन् ॥३३२॥

इत्याचार्यश्रीविनयचन्द्रविरचिते श्रीमल्लिस्वामिचरिते महाकाव्ये विनयाङ्के दीक्षाकेवलज्ञानोत्पत्तिसंकीर्तनो नाम पञ्चम सर्ग. ।



अर्हम्

# अथ षष्ठः सर्गः ।



यो-लङ्केशविलोपनव्रतधरो-रौद्रं च धर्मं भजन्
संप्राप्तः सकलत्र एव तपसे ताताऽनुमत्या-वने ।
राज्यप्राज्यसुखोत्सवस्य विमुखो रामावतारो जिनः
स श्रीमल्लिरपौरुषेयचरितः पायादपायाज्जगत् ॥१॥

अथारभत विश्वेशः क्लेशनाशाय देशनाम् ।
गिरा संदेहहारिण्या पञ्चत्रिंशद्गुणस्पृशा ॥ २ ॥

भो भो भव्याः ! भवाम्भोधौ भ्रमद्भिर्नित्यमङ्गिभिः ।
दुष्प्रापमेव मानुष्यं समिलायुगयोगवत् ॥ ३ ॥

कथञ्चित् तत्र लब्धेऽपि सम्यक् तत्त्वं सुदुर्लभम् ।
देवतत्त्व-गुरुतत्त्व-सम्यक्तत्त्वस्वरूपभृत् ॥ ४ ॥

एवंस्वरूपं सम्यक्त्वं ये रक्षन्ति दिशन्ति च ।
परेषां, दवदन्तीव लभन्ते परमं पदम् ॥ ५ ॥

उपाष्टापदमस्त्यत्र भारते सङ्गरं पुरम् ।
मम्मणस्तत्र भूपोऽभूद् वीरमत्यस्य वल्लभा ॥ ६ ॥

पापर्द्ध्यै सोऽन्यदाऽचालीत्सकलत्रः पुराद् वहिः ।
मुनिं वीक्ष्य समायान्तमशकुनममन्यत ॥ ७ ॥
पृथक्कृत्य द्रुतं सार्थाद् नीत्वा राजकुले ततः ।
घटिका द्वादश द्वाभ्यां ताभ्यामृषिरखेदि सः ॥ ८ ॥
ताभ्यां कृपावशात् पृष्टः कुत आगाः क्व यास्यसि ? ।
तेनोक्तमष्टापदाद्रौ याता विम्बानि वन्दितुम् ॥ ९ ॥
वियोजितो भवद्भ्यां च सार्थादस्मि शुभाशयौ ! ।
श्रुत्वेति लघुकर्मत्वात् तौ कोपं जहतुः क्षणात् ॥१०॥
ततो जीवदयामूलं धर्ममाख्यद् महामुनिः ।
धर्माभिमुख्यं तौ प्राप्तौ प्रत्यलाभयतां च तम् ॥११॥
ताभ्यामनुमतः सोऽष्टापदं प्राप ततो मुनिः ।
आर्हतं तौ पुनर्धर्मं पालयामासतुश्चिरम् ॥ १२ ॥
निन्येऽन्यदा वीरमती धर्मस्थैर्यप्रवृद्धये ।
देव्या शासनवाहिन्याऽष्टापदे पुण्यसंप्रदे ॥ १३ ॥
प्रतिमां पूजयन्ती सा परमानन्दमाप च ।
वन्दित्वा पुनरप्यागात् स्वपुरे देवतावशात् ॥ १४ ॥
सा विंशतिमाचाम्लानि चक्रे जिनं जिनं प्रति ।
चतुर्विंशतिसंख्यानि तिलकान्यप्यकारयत् ॥ १५ ॥
अन्यदाऽष्टापदे गत्वा स्नात्रपूजापुरस्सरम् ।
प्रतिमानां ललाटेषु तिलकानि व्यधत्त सा ॥ १६ ॥
दत्त्वा दानं च साधूनां तपस्तदुददीपयत् ।
कृतार्थाऽथ प्रनृत्यन्ती चेतसाऽगाद् निजं पुरम् ॥१७॥
पालयित्वाऽऽर्हतं धर्मं समाधिमरणेन तौ ।
पूर्णकाले देवलोके दाम्पत्येन बभूवतुः ॥ १८ ॥
प्रच्युत्य मम्मुणो जम्बूद्वीपे भरतमण्डने ।
वहलीसंज्ञके देशे पुरे पोतननामनि ॥ १९ ॥
धम्मिलाभाऽभीरपत्नीरेणुकाकुक्षिसम्भवः ।

धन्यो नाम सुतो जज्ञे धन्यंमन्यः पिता यतः ॥२०॥
(युग्मम्)

वीरमत्या अपि प्राणी प्रच्युत्य विबुधालयात् ।
धन्यस्य गृहिणी जज्ञे धूसरी नामधेयतः ॥ २१ ॥
धन्योऽथ चारयाञ्चक्रे महिषीरनुवासरम् ।
वर्षाकालोऽन्यदा कालः प्रोषितानां समाययौ ॥२२॥
वर्षत्यपि घने हर्षाद् महिषीचारणोद्यतः ।
बिभ्राणश्छत्रकं मूर्ध्नि धन्यो वन्यामथाऽभ्रमत् ॥२३॥
कायोत्सर्गस्थितं साधुमेकमेकपदे स्थितम् ।
वृष्टिशैत्येन सर्वाङ्गं कम्पमानं ददर्श सः ॥ २४ ॥
तं दृष्ट्वा सकृपश्छत्रं तस्य मूर्धन्यधारयत् ।
वृष्टिकष्टमजानानः सुखेन स मुनिः स्थितः ॥ २५ ॥
वृष्टेर्न व्यरमद् मेघः कायोत्सर्गाद् मुनिर्न च ।
छत्रधारणतो धन्यो, बद्धस्पर्धा इवाऽत्र ते ॥ २६ ॥
मेघेऽथ विरते साधुः कायोत्सर्गमपारयत् ।
प्रणम्य चांह्रिसंवाहपूर्वकं तमुवाच सः ॥ २७ ॥
महर्षे ! कुत आयासीः किल कालेऽत्र पङ्किले ? ।
पाण्डुदेशादिहायातो यास्यामि च गुरुं प्रति ॥ २८ ॥
प्रोचे धन्यो मुनिं नत्वाऽध्यारोह महिषं मम ।
मुनिराह न जीवेषु समारोहन्ति साधवः ॥ २९ ॥
धन्योऽथ महिषीं दुग्ध्वा दुग्धकुम्भमुपानयत् ।
पारणं कारयाञ्चक्रे वक्रेतरमना मुनिः ॥ ३० ॥
वर्षाकालमतिक्रम्य पोतनात् स मुनिर्ययौ ।
धन्योऽपि सह धूसर्या विशिष्टश्रावकोऽभवत् ॥३१॥
दीक्षां गृहीत्वा सप्ताब्दीं पालयित्वा समाहितौ ।
विपद्य युग्मधर्माणौ जातौ हैमवतेऽथ तौ ॥ ३२॥
ततो मृत्वाऽनार्तरौद्रध्यानसन्धानबन्धुरौ ।

अभूतां दम्पतीत्वेन क्षीरडिण्डीरनामकौ ॥ ३३ ॥
देवश्च्युत्वाऽत्र भरते देशे कोशलनामनि ।
कोशलायां महापुर्यां निषधस्य महीभुजः ॥ ३४ ॥
सुन्दरायां महादेव्यां नलो नामाऽभवत् सुतः ।
सात्त्विको विपरीतस्तु तल्लघुः कूबराभिधः ॥ ३५ ॥
(युग्मम्)
इतो विदर्भदेशेषु नगरे कुण्डिनाभिधे ।
अभूद् भीमरथो राजा पुष्पदन्तीति तत्प्रिया ॥ ३६ ॥
अन्यदा क्षीरडिण्डीरा देवी प्रच्युत्य नाकतः ।
सुतात्वेनाऽवततार तस्याः कुक्षौ शुभे क्षणे ॥ ३७ ॥
सुखप्रसुप्ता सा स्वप्नं प्रेक्ष्य राज्ञे व्यजिज्ञपत् ।
जाने हस्ती दवत्रस्तस्तवौकसि समाययौ ॥ ३८ ॥
व्याजहार ततो राजा देवि ! राजश्रियाऽधिकम् ।
सैन्येषु मुख्यो दन्तीव गर्भस्तव भविष्यति ॥ ३९ ॥
एवं च कुर्वतोर्वार्तां तयोर्दन्ती समागमत् ।
व्याकर्तुमिव तत्स्वप्नविचारं चारु संचरन् ॥ ४० ॥
सकलत्रं नृपं स्कन्धे समारोप्य परिभ्रमन् ।
नागरैः पूजितः सौधे तावानीयोदतारयत् ॥ ४१ ॥
आलाने च स्वयं लीनः सिन्धुरो गोत्रबन्धुरः ।
सुमनोभिः सुमनोभी रत्नैश्च ववृधेऽधिकम् ॥ ४२ ॥
विलिप्य द्विपमर्चित्वा चक्रे नीराजनां नृपः ।
स्थितः स तत्र गर्भस्य पुण्येनेव स्थिरीकृतः ॥ ४३ ॥
पूर्णे काले राजकान्ताऽजनयत् तनयां च सा ।
तद्भाले तिलको नित्योऽभवद् रविरिव द्यवि ॥ ४४ ॥
स्वयं तेजस्विनी तेन विशेषात्तिलकेन सा ।
दिद्युते विद्युतेवोच्चैर्धारा वारिधरोद्भवा ॥ ४५ ॥
प्रभावाज्जन्मनस्तस्या भीमो भीमपराक्रमः ।

अधृष्यो भूभुजां जज्ञे वाडवेनेव वारिधिः ॥ ४६ ॥
तस्यां स्वप्नगतं प्रत्यक्षागतं च मतङ्गजम् ।
वीक्ष्य भीमरथो नाम दवदन्तीति निर्ममौ ॥ ४७ ॥
पद्मसुन्दरनिःश्वासा पद्मास्या पद्मलोचना ।
जितपद्मा पाणिपादैर्मूर्ता पद्मेव सा बभौ ॥ ४८ ॥
तामष्टवर्षदेशीयां कलाज्ञापनहेतवे ।
कलाचार्यस्य धुर्यस्याऽर्पयामास शुभे दिने ॥ ४९ ॥
तस्याः प्रज्ञातिशायिन्याः साक्षिमात्रमभूद् गुरुः ।
स्याद्वादवादवादिन्याः प्रतिवादी न कश्चन ॥ ५० ॥
तां पारदृश्वरीं वागीश्वरीमिव कलाम्बुधेः ।
राजा निरीक्ष्य दीनारलक्षं तद्गुरवे ददौ ॥ ५१ ॥
तामुवाचाऽन्यदा साक्षाद्भूय निर्वृतिदेवता ।
भाविनः शान्तिनाथस्य पूज्येयं प्रतिमा त्वया ॥५२॥
देवी तिरोऽभूदित्युक्त्वा प्रतिमां दवदन्त्यथ ।
अजस्रं पूजयामास निवेश्य सदने निजे ॥ ५३ ॥
समं सखीभिः क्रीडन्ती सा लताभिरिवालिनी ।
अनङ्गरतिविश्रामोपवनं प्राप यौवनम् ॥ ५४ ॥
दन्तीव दवदन्तीं तामन्यूनकुचकुम्भिनीम् ।
निरीक्ष्य पितरौ चित्तं चक्रतुस्तद्विवाहने ॥ ५५ ॥
दूयेतां पितरौ चित्ते तद्योग्यवरचिन्तया ।
दवदन्ती बभूवोच्चैरष्टादशसमाक्षमा ॥ ५६ ॥
योषितां स्यादनूढानां प्रौढानां हि स्वयंवरः ।
विचिन्त्येत्याऽऽदिशद् राज्ञामाह्वानाय नरान् नृपः॥५७॥
भूपा भूपालपुत्राश्च तत्र लावण्यशालिनः ।
एकैकशोऽधिका लक्ष्म्या त्वरितास्तत्र चाययुः ॥५८॥
तत्र दूतसमाहूतो निषधोऽपि समाययौ ।
पुत्रावपि समं तेनाऽऽजग्मतुर्नलकूबरौ ॥ ५९ ॥

सर्वेषामपि भूपानां स्वागतं कुण्डिनेश्वरः ।
चकार युज्यते ह्येतदागतेऽभ्यागते जने ॥ ६० ॥
अचीकरदथो भीमः स्वयंवरणमण्डपे ।
मञ्चास्तदन्तःसौवर्णसिंहासनमनोहरान् ॥ ६१ ॥
आययुस्तत्र राजानो दिव्यालङ्कारभासुराः ।
निषेदुरथ मञ्चेषु कुर्वाणाः स्फुटचेष्टितम् ॥ ६२ ॥
कश्चित् करसरोजेन लीलासरसिजं जितम् ।
लीलयोल्लालयामास निरस्यन्निव दूरतः ॥ ६३ ॥
कश्चिच्च मल्लिकामाल्यमाजघ्रौ भृङ्गवद् युवा ।
यशसो मल्लिकायाश्च परीक्षितुमिवान्तरम् ॥ ६४ ॥
कश्चिदुल्लालयाञ्चक्रे करात् कुसुमकन्दुकम् ।
दधानो गोलकाभ्यासं पुष्पायुध इवाधिकम् ॥ ६५ ॥
पस्पर्श पाणिना कश्चिद् मासुरीं स्वामनुक्षणम् ।
अहमेव पुमानेवमिव शंसितुमादरात् ॥ ६६ ॥
अनर्तयच्छुरीं कश्चिद् मुष्टिरङ्गे मुहुर्मुहुः ।
क्वणत्कङ्कणतालेन नाट्याचार्य इवोद्भटः ॥ ६७ ॥
दीप्रदीपप्रभेव द्रागाययौ वरमण्डपम् ।
द्योतयन्ती दवदन्ती पितुरादेशतस्तदा ॥ ६८ ॥
मौक्तिकप्रायसच्छायाऽलङ्कारसमलङ्कृताम् ।
जङ्गमामजडां स्वच्छां ताम्रपर्णीमिवाऽपराम् ॥ ६९ ॥
रवेरिवाग्रजं-भाले तिलकं बिभ्रती सतीम् ।
निर्मार्जितमिवाऽऽदर्शं भूपालप्रतिबिम्बने ॥ ७० ॥
नीलोत्पलचलन्नेत्रां कज्जलोज्ज्वलकुन्तलाम् ।
दवदन्तीं नृपाः प्रेक्ष्य विश्रामं चक्षुषोर्व्यधुः ॥७१॥
(त्रिभिर्विशेषकम्)

पुरोभूय प्रतीहारी श्रीभीमरथशासनात् ।
नामग्राहं महीपालानारेभे शंसितुं ततः ॥ ७२ ॥

मुकुटेशाभिधो भूपः कुसुमायुधनन्दनः ।
उषेव पत्नी भवितुं चेदस्येच्छसि तद् वृणु ॥ ७३ ॥
जयकेशरिपुत्रोऽयं शशलक्ष्मा क्षमापतिः ।
किमस्य रोहिणीव त्वं पत्नीत्वं प्रतिपद्यसे ? ॥७४॥
चम्पाधिपो भोगवंशो धरणेन्द्रनृपात्मजः ।
सुबाहुर्बाहुमस्य त्वं गृहाण यदि रोचते ॥ ७५ ॥
दधिपर्णनरेन्द्रोऽयं सुंसुमारपुरेश्वरः ।
कृशाङ्गि ! स्वदृशा पश्य यद्याकर्षति ते मनः ॥७६॥
कोशलाधिपतिश्चैष निषधोऽरिनिषेधकः ।
वृषभस्वामिकुलधूर्वृषभो विदितोऽस्ति ते ॥ ७७ ॥
तनयः सनयश्चास्य नलः प्रबलदोर्बलः ।
उन्नतोऽपि विनीतात्मा तवास्त्वभिमतः शुभे ! ॥७८॥
दवदन्त्यपि तत्कालं मालां नलगलेऽक्षिपत् ।
अहो ! सुष्ठु वृतं सुष्ठु वृतमित्यभवद् ध्वनिः ॥७९॥
कृष्णराजः समाकृष्टखड्गोऽथ नलमाक्षिपत् ।
तं नलोऽपि तथाऽवादीदुचितं क्षत्रियेष्वदः ॥ ८० ॥
द्वयोरपि ततोऽनीकं संवर्मितमभूत् तदा ।
दवदन्ती ततः सत्यश्रावणामीदृशीं व्यधात् ॥ ८१ ॥
अर्हन् देवो गुरुः साधुश्चेद् मे, तत्सैन्ययोर्द्वयोः ।
क्षेमोऽस्तु विजयी चास्तु नलः परबलं द्विषन् ॥८२॥
तद्वाक्यात् कृष्णराजस्य करात् खड्गमथाऽपतत् ।
स ननाम नलं मूर्ध्ना चिरेणाऽऽगतभृत्यवत् ॥८३॥
उवाच च विनीताङ्गो मन्तुमेकं क्षमस्व मे ।
तं संभाष्य नलोऽमुञ्चद् भीमोऽपि मुदितोऽजनि॥८४॥
अन्यान् संभाष्य भूमीशान् भीमो व्यसृजदञ्जसा ।
पाणिग्रहोत्सवं चक्रे दवदन्त्या नलस्य च ॥ ८५ ॥
तद्विवाहोत्सवे वृत्ते हस्तमोचनपर्वणि ।

दद्दौ नैषधये भीमभूमीशः सिन्धुरादिकम् ॥ ८६ ॥
वधूवरौ नवोढौ तौ सकङ्कणकराम्बुजौ ।
गृहबिम्बान्यवन्देतां भवद्धवलमङ्गलौ ॥ ८७ ॥
भीमः सपुत्रं निषधं संमान्याऽथ विसृष्टवान् ।
प्रयाणकानि कतिचित् समागत्य स्थितः स्वयम् ॥८८॥
यान्तीमनुनलं भैमीं पुष्पदन्त्यन्वशादिति ।
ध्वजेव वंशं हे वत्से ! मा त्याक्षीर्व्यसने पतिम् ॥८९॥
मातृशिक्षां गृहीत्वेति दवदन्तीमुपागताम् ।
न्यवेशयद् रथक्रोडे नलः क्रोडेऽपि च प्रियाम् ॥९०॥
ततश्च कोशलाधीशो मार्गेऽखण्डप्रयाणकैः ।
नव्यैः काव्यैरिव कविः शास्त्रवर्त्माऽतिगच्छति ॥९१॥
प्रयाणं कुर्वतस्तस्य ततोऽस्तमगमद् रविः ।
ब्रह्माण्डं तमसाऽपूरि तद् दृष्ट्वोचे नलः प्रियाम् ॥९२॥
क्षणं देवि प्रबुध्य त्वं तिलकं प्रकटीकुरु ।
परिमार्ज्य ललाटं सा दीपवत् तमदीपयत् ॥ ९३ ॥
निर्विघ्नं तेजसा तेन चचाल सकलं बलम् ।
नलः पुरःस्थितं कायोत्सर्गिणं मुनिमैक्षत ॥ ९४ ॥
उवाच निषधं नाथ ! दृश्यतां वन्द्यतां मुनिः ।
अयं च घृष्टो मत्तेनेभेन यत्कलितोऽलिभिः ॥ ९५ ॥
न चालितः परं ध्यानात् तेन मत्तेन दन्तिना ।
ततः सपुत्रो निषधः श्रद्धया तं न्यसेवत ॥ ९६ ॥
नलश्च दवदन्ती च निषधः कूबरोऽपि च ।
नन्वा नत्वा च निरुपद्रवं कृत्वा मुनिं ययुः ॥ ९७ ॥
कोशलायां समाजग्मुर्महेन च महीयसा ।
दवदन्त्यालोक्यमानचैत्यायां हृष्टचेतसा ॥ ९८ ॥
कदाचिद् गीतनृत्ताभ्यां जलकेल्या कदाचन ।
कदापि दोलाखेलाभिः कदाचिद् द्यूतकर्मणा ॥९९॥

नलश्च दवदन्ती च स्वेच्छयोद्यानवीथिषु ।
गतं कालं न जानाति, स्वर्गिणामिव दम्पती ॥१००॥
(युग्मम्)

अन्यदा निषधो राज्ये स्थापयित्वा नलं सुतम् ।
यौवराज्ये कूवरं च स्वयं दीक्षामुपाददे ॥ १०१ ॥
न्यायधर्ममयं राज्यं नलः प्रबलविक्रमः ।
पालयन्नन्यदाऽपृच्छदमात्यादीन् क्रमागतान् ॥१०२॥
पित्रादीनां भुवं शास्स्यधिकां वा ते ततोऽवदन् ।
त्र्यंशोनं भरतं भुक्तं त्वत्पित्रा, सकलं त्वया ॥ १०३॥
किन्तु तक्षशिला नाम पूर्योजनशतद्वये ।
तत्र राजा कदम्बोऽस्ति त्वदाज्ञां स न मन्यते॥१०४॥
तच्छ्रुत्वा नलभूपालः कोपाटोपसमुद्भटः ।
दूतं व्यसृजदेतस्य स गत्वा तमवोचत ॥ १०५ ॥
मत्स्वामिनोऽनलस्फूर्तितेजसो नलभूपतेः ।
आत्मानं यमपूर्मध्ये आज्ञां मा नय मानय ॥१०६॥
कदम्बराजस्तच्छ्रुत्वा भ्रुकुटीभीषणाननः ।
तमर्धचन्द्रयाञ्चक्रे स्वकीयमिव जीवितम् ॥ १०७ ॥
दूतोऽपि गत्वा तत्सर्वं नलायाऽकथयत्तराम् ।
तं चाऽभिषेणयाञ्चक्रे नलः सबलवाहनः ॥ १०८ ॥
सैन्येन वेष्टयामास नलस्तक्षशिलां पुरीम् ।
कदम्बः सह सैन्येन संमुखस्तस्य चाभवत् ॥१०९॥
मिथः समरसंरम्भसमारम्भे तयोर्भृशम् ।
नलः कदम्बं निर्द्वन्द्वो द्वन्द्वयुद्धमयाचत ॥ ११० ॥
तौ द्वावपि ततो द्वन्द्वैर्युद्धैरुद्धतदोर्युगौ ।
अयुध्येतां चिरं तत्र जङ्गमौ पर्वताविव ॥ १११ ॥
सर्वेष्वपि हि युद्धेषु कदम्बमजयद् नलः ।
अपसृत्य स जग्राह व्रतं वैराग्यवासितः ॥ ११२ ॥

नलस्तमूचे धन्योऽसि प्राज्यं राज्यं यदत्यजः ।
स नोत्तरमदात्तस्मै निरीहस्य नलो नलः ॥११३॥
जयशक्तिं च तत्सूनुं नलो राज्ये न्यवेशयत् ।
नलस्य भरतार्धाऽभिषेकश्चक्रे च पार्थिवैः ॥११४॥
कोशलायामथायातो नगर्यां कोशलेश्वरः ।
महेन महता भैम्या सहाऽस्थात्पालयन् भुवम् ॥११५॥
कूबरो राज्यलुब्धस्तु नलच्छलगवेषणम् ।
कुरुते प्रत्यहं दुष्टव्यन्तरः शुभपात्रवत् ॥११६॥
नलश्च कूबरश्चापि द्यूतासक्तिजुषावुभौ ।
जयं पराजयं चापि लेभाते पाशपातनात् ॥११७॥
अन्यदा न नलस्याऽनुकूलोऽक्षः काङ्क्षितोऽपतत् ।
कूबरोऽमारयत् शारांस्ततस्तस्य मुहुर्मुहुः ॥११८॥
कूबरेण पराजिग्ये पुरग्रामादिकं नलः ।
विषण्णो राजलोकोऽथ कूबरो हर्षमाययौ ॥११९॥
दवदन्त्यवदद् द्यूतव्यसनाऽनलसं नलम् ।
स्वामिस्ते बन्धनायैतौ पाशकौ पाशकाविव ॥१२०॥
कूबराय वरं राज्यं स्वयं दत्तं त्वया शुभम् ।
आत्तं द्यूते पराजित्य प्रवादोऽयं न सुन्दरः ॥१२१॥
पश्यति स्म शृणोति स्म तां तद्वाचं च नो नलः ।
अवज्ञाता ततः पत्या सुदती रुदती ययौ ॥१२२॥
कुलामात्यैरपि द्यूताद् निषिद्धो नैषधिस्ततः ।
तद्वचो नहि शुश्राव सद्यो भूताभिभूतवत् ॥१२३॥
पृथिवीं हारयामास सान्तःपुरपरिच्छदाम् ।
नलो मुमोचाऽथ सर्वं गात्रादाभरणादिकम् ॥१२४॥
कूबरो नलमूचे च नल ! राज्यं परित्यज ।
राज्यं ममैतदभवत् पाशैर्वङ्कमिवाधिकम् ॥१२५॥
न दूरे दोष्मतां राज्यमिति नरवलोऽथ तम् ।

संव्यानमात्रद्रविणः प्रचचाल कलानिधिः ॥१२६॥
अनुयान्तीं नलं भैमीं कूवरस्त्ववराशयः ।
उवाच त्वं जिता द्यूते मेऽन्तःपुरमलंकुरु ॥१२७॥

इतश्च—

अमात्याः कूबरं प्रोचुर्मा कोपय सतीमिमाम् ।
ज्येष्ठो भ्राता पितेव स्यात् तादियं जननी तव॥१२८॥
बलादपि नलादेतां यद्याच्छिद्य ग्रहीष्यसि ।
त्वां कोपज्वलनेनेयं ततो भस्मीकरिष्यति ॥१२९॥
अनुयान्ती नलं तस्मादियं प्रोत्साह्यतां त्वया ।
नलं विसृज तद्भैम्या सरथ्यरथसारथिम् ॥१३०॥
इत्युक्तः कूबरश्चक्रे तत्तथाऽमात्यभाषितम् ।
निषेधं नैषधिश्चक्रे कूबरस्य रथार्पणे ॥१३१॥
प्रधानपुरुषाः प्रोचुर्नलं नाथ! त्वया समम् ।
कथं नु वयमायामः सेव्यः पट्टो यतोऽस्ति नः? ॥१३२॥
तेनाद्य जगतीनाथ! नागच्छामस्त्वया सह ।
तेऽधुना दवदन्ती च मित्रं मन्त्री प्रिया सखा ॥१३३॥
तदियं पादचारेण कथं यास्यति वर्त्मनि? ।
गृहाण तद्रथं नाथाऽनुगृहाण जनानमून् ॥१३४॥
अभ्यर्थनां प्रधानानामङ्गीकृत्य स कृत्यवित् ।
दवदन्त्या सहाऽऽरुह्य रथं राजपथेऽचलत् ॥१३५॥
नार्यो भैमीमेकवस्त्रां वीक्ष्याभ्यङ्गोद्यतामिव ।
ववृषुर्दुःखतश्चेलक्नोपमश्रान्तमश्रुभिः ॥१३६॥
गच्छन् नगरमध्येन पञ्चहस्तशतीमितम् ।
नलः स्तम्भं समुन्मूल्य पुनरारोपयत्तदा ॥१३७॥
तद् दृष्ट्वा प्रोचिरे पौरा अहो! सत्त्वमहो! बलम् ।
नलस्य बलिनोऽप्यस्य व्यसनं दैवतोऽभवत् ॥१३८॥
ज्ञानिना मुनिनैकेन पुराऽस्ति कथितं किल ।

भाग्ययं भरतार्धेशः क्षीरदानवशाद् मुनौ ॥१३९॥
स्तम्भमुन्मूल्य चारोप्य भाग्यर्धभरताधिपः ।
मिलितं तदिदं किन्तु राज्यभ्रंशोऽस्य दुःखकृत्॥१४०॥
अस्यां पुर्यां पुना राजा भवेद्यदि पुनर्नलः ।
स्ववान्धवं प्रति क्रूरो नन्दिष्यति न कूवरः ॥१४१॥
इत्थं पौरवचः शृण्वन्नत्याक्षीत् कोशलां नलः ।
दवदन्त्या समं वाष्पैः कृतहारावतारया ॥१४२॥
दवदन्तीं नलोऽवादीद् देवि! यामः क सम्प्रति ।
भैमी वभाषे मे तातोऽतिथीभूय पवित्र्यताम् ॥१४३॥
हयान्न प्रेरयामास सारथिः कुण्डिनं प्रति ।
कर्मावलीमिवाऽलङ्घ्यां पर्याटदटवीं नलः ॥१४४॥
भल्लीहताच्छभल्लादीन् भिल्लांस्तत्र ददर्श सः ।
दधाविरे नलं दृष्ट्वा ते शरासारवर्षिणः॥ १४५ ॥
नलोऽप्याकृष्टखङ्गः सन् दधावे नाहलान् प्रति ।
सत्त्वशुद्धौ तदाकृष्टघटसर्प इवाऽधिकम् ॥ १४६ ॥
भैमी भुजे नलं धृत्वा वभाषे नाथ! कीदृशः ?।
ईदृशेषु तवाक्षेपो गजस्य मशकेष्विव ॥ १४७ ॥
भरतार्धजयोत्सिक्तो निस्त्रिंशस्त्रपते ह्ययम् ।
सुनियोगी कुनियोगे योजितः स्वामिना यथा ॥१४८॥
भैमी तानभि हुंकारान् मुमोच शरदारुणान् ।
तेषां प्रभावात् ते काकनाशं नेशुर्जनंगमाः ॥१४९॥
वभूवतू रथाद् दूरे तौ तु तानभिगामुकौ ।
तयोरथ रथो भिल्लैरपरैरपहारितः ॥१५०॥
करे भीमसुतां कृत्वा पर्याटीदटवीं नलः ।
तस्या विश्वासनायेव ददानो दक्षिणं करम् ॥१५१॥
वैदर्भी दर्भसंदर्भगर्भक्रामत्पदद्वयी ।
सानुरागामिवारण्यं चक्रे रुधिरविन्दुभिः ॥१५२॥

पट्टबन्धं तदा पादद्वन्द्वे तस्या नलो व्यधात् ।
मार्गस्तावाननतिक्रम्यो यतस्तस्य प्रभावतः ॥१५३॥
तरुमूलसमासीनां भीमजां निरवापयत् ।
स्वकीयपरिधानस्य चालयन्नञ्चलं नलः ॥१५४॥
त्रिपत्रपत्राण्यादाय पुटीकृत्य जलं नलः ।
समानीयाऽपाययत् तां प्रवृद्धं नेत्रवारिभिः ॥१५५॥
विनयाद् भीमतनयाऽपृच्छदेतद् कियद्वनम् ।
नलोऽवादीदिदं देवि ! गव्यूतीनां चतुःशती ॥१५६॥
कोशानां विंशतिश्चैकाऽऽवाभ्यामुल्लङ्घिताऽत्र तु ।
एवं वार्तयतोः सूर्योऽस्तमापाऽनित्यतां वदन् ॥१५७॥
अशोकपत्राण्युच्चित्य दवदन्त्याः कृते नलः ।
अनल्पं कल्पयाञ्चक्रे तल्पमल्पेतराशयः ॥१५८॥
उवाच दयितां देवि ! तल्पे निद्रासखी भव ।
स्थास्यामि जागरूकोऽहं यामिन्यां यामिको यथा १५९॥
संव्यानार्धं नलस्तल्पे निक्षिप्य प्रेयसीं ततः ।
अस्तृणत् , सा सुष्वाप स्मृत्वा पञ्चनमस्कृतिम् ॥१६०॥
निद्राजुषि दवदन्त्यां ध्यायति स्माथ नैषधिः ।
व्यसने श्वशुरस्याथ धिग् मां शरणयायिनम् ॥१६१॥
तद्वल्लभामपि त्यक्त्वा विधाय हृदयं दृढम् ।
आत्मानमेकमादाय गच्छाम्यूर्ध्वमुखो वरम् ॥१६२॥
मन्ये न हि स्यादेतस्याः सुशीलाया उपद्रवः ।
सतीनामङ्गरक्षाकृच्छीलमेकं यतो मतम् ॥ १६३ ॥
छुर्या चिच्छेद संव्यानं भैम्याः प्रेम्णा समं नलः ।
स्वरक्तेनाऽलिखद्भीमसुतावस्त्रेऽक्षराणि च ॥१६४॥
अयमध्वा विदर्भेषु याति न्यग्रोधरोधसा ।
कोशलेषु तु तद्वामस्तद्गच्छेस्त्वं यथारुचि ॥१६५॥
लिखित्वेति नलः कोशान्निर्भृतं निभृतक्रमः ।

पश्यन् विवलितग्रीवं ततो गन्तुं समुद्यतः ॥१६६॥
तावद् ययौ नलो यावद्दृश्या दवदन्त्यभूत् ।
वलित्वा पुनरप्यागात् पतितद्रविणो यथा ॥ १६७॥
दध्याविति नलो दृष्ट्वा भैमीं भूतलशायिनीम् ।
अधिशेतेऽध्वनि श्रान्तं शुद्धान्तं नैषधेरहो ! ॥१६८॥
हहा ! समाचिन्वा दुष्टकर्मणा मे कुकर्मणः ।
दशामेतादृशीं प्राप्ता कुलीनेयं कलानिधिः ॥१६९॥
धिग् मामधर्मकर्माणं मर्मथापकवद् भृशम् ।
शुद्धशीला धर्मशीला यदेवं प्रापिता दशाम् ॥१७०॥
निर्नायका समीपस्थे मयि सत्यपि ही ! नले ।
भूमौ नितम्बिनी शेते क्षेत्रस्थेव कुटुम्बिनी ॥१७१॥
एतामेकाकिनीं मुक्त्वाऽन्यतो यास्याम्यहं यदि ।
मन्ये जीवितमेतस्या भविता मे पुरस्सरम् ॥१७२॥
रक्ता भक्ता परित्यक्तुं युक्ता नेयं ततो मम ।
दुःखं वापि सुखं वापि तत् सहिष्ये सहैतया ॥१७३॥
अथवा स्वपितुर्गेहं बलाद् नेष्यति मामियम् ।
वरं पितृपतेर्गेहं न तु पत्नीपितुर्गृहम् ॥१७४॥
तस्मादहं गमिष्यामि गृहीत्वा जठरं निजम् ।
मान्यां ममाज्ञां बिभ्राणा यात्वसौ सुजनालये ॥१७५॥
निश्चित्येति नलश्चित्ते तामुल्लङ्घ्य विभावरीम् ।
प्रबोधकाले वैदर्भ्यास्त्वरितस्त्वरितं ययौ ॥१७६॥
प्रभाते मारुते वाति कमलामोदमेदुरे ।
भीमपुत्री निशाशेषे स्वप्नमीदृशमैक्षत ॥१७७॥
यदहं सहकाराधिरूढाऽस्मि वनदन्तिना ।
भग्नः स तु समागत्य भ्रष्टा तस्मादहं ततः ॥१७८॥
प्रबुद्धा भीमतनया नाऽपश्यद् नलमग्रतः ।
समालुलोके ककुभः सा विक्रीता च शिष्टवत् ॥१७९॥

अकारुण्यादरण्यान्तः कथं मां वल्लभोऽमुचत् ।
भविष्यति गतो मन्ये क्षालनाय मुखस्य वा ॥१८०॥
यद्वा पलाशपालाशैरानेतुं विमलं जलम् ।
मन्मुखक्षालनायाऽयमुद्यतो नैति यद् नलः ॥१८१॥
तदेव हि सरोऽरण्यसरिद्गिरिगुहादिकम् ।
नलं विनाऽखिलं युक्तमनलं तनुते दृशोः ॥१८२॥
एवं चिन्ताचान्तचेतोवृत्तिर्दिगवलोकिनी ।
स्वप्राणेशमपश्यन्ती स्वप्नस्याऽर्थं व्यचारयत् ॥१८३॥
सहकारो नलो राज्यं फलं परिजनो लयः ।
दवदन्ती परिभ्रष्टाऽस्म्यहं तद् दुर्लभो नलः ॥१८४॥
स्वप्नार्थनिश्चयादेवं दध्यौ भीमसुता हृदि ।
न भर्ता न च राज्यं मे दैवाद् भ्रष्टा द्वयोरपि ॥१८५॥
सारतारस्वरं तारलोचना विललाप सा ।
दुर्दशापतितानां ह्यवलानां रुदितं बलम् ॥१८६॥
प्राणनाथ ! किमु त्यक्ता भक्तचित्ताऽपि हि त्वया ।
कथं भारं तवाऽकार्षं यद्वा चरणबन्धनम् ? ॥१८७॥
तिरोहितोऽथ वल्लीभिः परिहासेन यद्यसि ।
तदेहि दर्शनं स्थातुं न चिरं रुचिरं यतः ॥१८८॥
याचते दवदन्त्येषा वनदेव्यः ! प्रसीदत ।
प्रियं प्रियस्य मार्गं वा मह्यं दर्शयताऽनघाः ! ॥१८९॥
त्वं धरित्रि ! भव द्वैधं पवन ! त्वं गृहाण माम् ।
दूरं जीवित ! गच्छ त्वं प्राणास्त्यजत मां लघु॥१९०॥
इति भीमसुता वृक्षान् सिञ्चन्ती नयनोदकैः ।
स्वयं तेनेऽश्रुपुष्पाणि दुःखमेकं फलं परम् ॥१९१॥
न जले न स्थले नैव छायायामातपे न च ।
लवोऽपि हि सुखस्याऽभूच्चिन्तयन्त्या नलं नलम्॥१९२॥
स्वं संस्थाप्य स्वयं वस्त्रान्तेन वक्त्रममार्जयत् ।

तत्राक्षराणि संवीक्ष्य मुदिताऽवाचयत् ततः ॥१९३॥
अचिन्तयच्च तच्चेतोगगनाङ्गणचन्द्रिका ।
ध्रुवमस्त्यन्यथाऽऽदेशप्रसादोऽयं कथं मम ॥ १९४ ॥
ततः स्वभर्तुरादेशं दधाना हृदयेऽधिकम् ।
व्रजामि स्वपितुर्धाम पत्युर्न तु पतिं विना ॥१९५॥
मया सह प्रियेणाऽपि गन्तव्यं वाञ्छितं पुरा ।
विशेषेणाद्य तद् यामि पत्यादेशात् पितुर्गृहम्॥१९६॥
ध्यात्वेति गन्तुमारेभे दवदन्ती वटाध्वना ।
वीक्ष्यमाणाऽक्षराण्युच्चैर्मूर्तं नलमिवाऽग्रतः ॥१९७॥
व्याघ्रा व्यात्तमुखाः सर्पाः सदर्पा नगजा गजाः ।
ज्वाला जाङ्गुलिका सिंहीवदस्या दूरतोऽभवन्॥१९८॥
अन्येऽप्युपद्रवास्तस्या यान्त्या वर्त्मनि नाऽभवन् ।
पतिव्रताव्रतं स्त्रीणां क्षेमस्थेमावहं यतः ॥ १९९ ॥
सा लोलकुन्तला स्वेदजलाविलवपुर्लता ।
समुत्सुकपदं यान्ती हृद्यमान्ती महाशुचा ॥ २०० ॥
दर्भविद्धपदप्रोद्यद्रक्तासिक्तमहीतला ।
सार्थमेकमुदैक्षिष्ट विष्टपार्धिनिकेतनम् ॥ २०१ ॥
अचिन्तयच्च सार्थोऽयं मया लब्धस्तरण्डवत् ।
अरण्यार्णवनिस्तारस्तदनेन भविष्यति ॥ २०२ ॥
यावत् तस्थावसौ स्वस्था दवदन्ती महासती ।
तावत् तं रुरुधुः सार्थं कचिदागत्य दस्यवः ॥२०३॥
आयान्तीमिति च दृष्ट्वा ततश्चौरचमूममूम् ।
चकारविभयां लोको यतः स्याद् भाजने भयम्॥२०४॥
मा मा यूयं भयं लोकाः ! कुरुध्वं सार्थवासिनः ।
तदीयगोत्रदेवीवाऽवादीदिति नलप्रिया ॥ २०५ ॥
तस्करानवदद् रे रे ! यात दूरं दुराशयाः ! ।
अन्यथाऽनर्थसार्थो वः सार्थो यद् रक्ष्यते मया॥२०६॥

वदन्तीं दवदन्तीं ते समाकर्ण्याऽपि तस्कराः ।
मन्यन्ते स्म तृणाग्राऽपि नैते दैवपराहताः ॥२०७॥
ततस्तदीयाहङ्कारतिरस्काराय भीमजा ।
क्षेमकाराय सार्थस्य हुंकारान् मुमुचे दृढान् ॥२०८॥
श्रुत्वा तदीयहुंकारानन्नश्यन्नथ दस्यवः ।
कोदण्डदण्डटङ्कारात् कान्दिशीका द्विका इव ॥२०९॥
सार्थेशोऽथावदद् नत्वा तां निजां जननीमिव ।
काऽसि भामिनि! कस्माच्च परिभ्राम्यासि कानने?२१०
सवाष्पलोचना चास्मै वान्धवायेव भीमजा ।
यथावस्थं स्ववृत्तान्तं सर्वं कथितवत्यथ ॥ २११ ॥
अवोचत् सार्थनाथस्त्वं स्वामिनी जननी च मे ।
स्वामिनी नलपत्नीति जननी जीवदानतः ॥ २१२ ॥
तन्निष्कारणवन्धोस्ते किङ्करोऽस्मीति संलपन् ।
नीत्वा पटगृहे तस्या वरिवस्यापरोऽभवत् ॥२१३॥
स्फूर्जथुध्वनिवद्गर्जन्नूर्जितं तर्जितोष्मकः ।
वृष्टिं चकार विस्तारिधारं धाराधरस्ततः ॥ २१४ ॥
स्थाने स्थाने परीवाहाः प्रवहन्तो बभुस्तदा ।
पान्थसार्थस्य रोधाय खातिका इव निर्मिताः ॥२१५॥
तदा निरन्तरं वृष्टिरभवद् दिवसत्रयम् ।
दवदन्ती पुनस्तस्थौ सुखं सार्थेशमन्दिरे ॥२१६॥
विरते वारिदे वृष्टेर्दवदन्ती सती तदा ।
विहाय सार्थमेकाकिन्यपि यातवती ततः ॥२१७॥
प्रयान्ती पथि भैमी च कज्जलश्यामलद्युतिम् ।
कर्तिकानर्तनव्यग्रकरं पिङ्गलकुन्तलम् ॥२१८॥
ज्वालाकरालवदनं भयङ्करभयङ्करम् ।
मूर्तं यममिवाद्राक्षीद् राक्षसं क्षुद्रमानसम् ॥२१९॥
(युग्मम्)

उवाच भक्षयिष्यामि त्वामेवं राक्षसोऽवदत् ।
अभीता साऽवदद् धैर्याद् मदीय वचनं शृणु ॥२२०॥
मृत्युभीरकृतार्थानां कृतार्थाया न मे भयम् ।
मा मां संस्पृश, शापेन संस्पृशन् न हि नन्दसि ॥२२१॥
धीरां वाचमिति श्रुत्वा तस्याः स रजनीचरः ।
उवाच तुभ्यं तुष्टोऽस्मि किं करोमि ददामि किम्? २२२॥
सोचे तुष्टस्तदाऽऽख्याहि कदा मे पतिसङ्गमः? ।
रक्षोऽवादीद् द्वादशाब्दे प्रवासदिवसाऽऽदितः ॥२२३॥
समायातः स्वयं वेश्म पितुस्तव नलः किल ।
मिलिष्यति ततः खेदं हृदये मा कृथा वृथा ॥२२४॥
(युग्मम्)
त्वं चेद् भणसि त्वत्तातसदनेऽथ नयाम्यहम् ।
सोचे सहाऽन्यपुंसाऽहं न यामि स्वस्ति तेऽस्तु तत् २२५
आविष्कृत्य निजं रूपं यथागतमथागमत् ।
जग्राहाऽभिग्रहानित्थं भैमी द्वादशहायनीम् ॥२२६॥
विकृती रक्तवासांसि ताम्बूलं च विलेपनम् ।
भूषां च न ग्रहीष्यामि नलस्य मिलनावधेः ॥२२७॥
गिरिदर्यां तदाऽत्येतु प्रावृषं भैम्यवास्थित ।
बिम्बं श्रीशान्तिनाथस्य निर्ममे मृण्मयं स्वयम् ॥२२८॥
स्वयमानीय पुष्पाणि तत्पूजयति भीमजा ।
तपःप्रान्ते च कुरुते पारणं प्रासुकैः फलैः ॥२२९॥
भैमीमपश्यन् सार्थेशोऽप्यागादनुपदं तदा ।
अर्हद्बिम्बं पूजयन्तीं तां दृष्ट्वा मुमुदे हृदि ॥२३०॥
तां नत्वा धरणीपृष्ठे निविष्टो भीमजाऽपि तम् ।
विधाय स्वागतप्रश्नं सार्थनाथमवार्तयत् ॥२३१॥
तापसास्तत्र चाऽऽजग्मुः केऽपि त्वासन्नवासिनः ।

तस्थुस्तथोन्मुखा अब्दशब्दं श्रुत्वेव केकिनः ॥२३२॥
अनवच्छिन्नमम्भोभिरम्भोऽम्भोदस्तथाऽमुचत् ।
तापसाश्च मिथः प्रोचुः क्व वृष्टिर्वञ्च्यतामसौ ॥२३३॥
त्रस्तांस्तान् वीक्ष्य भैम्यूचे हंहो! मा भैष्ट तापसाः !।
कुण्डं तत्परिधौ कृत्वेत्युवाच च सतीतमा ॥२३४॥
सती यद्यस्मि तत्कुण्डादन्यतोऽब्दः प्रवर्षतु ।
तयेत्युक्ते तृणच्छन्न इव कुण्डेऽम्बु नाऽपतत् ॥२३५॥
वर्षत्यब्दे तथा शैलः सर्वतो निर्जरोऽभवत् ।
उपत्यका गिरेर्नीरपूरेणेव च निर्मिता ॥२३६॥
तेऽध्यायन् रूपशक्तिभ्यां भात्यसौ देवतेव नः ।
पप्रच्छ सार्थवाहस्तां को देवः पूज्यते त्वया ?॥२३७॥
तस्मै भैम्याऽऽख्यदर्हन्तं सर्वज्ञं त्रिजगद्गुरुम् ।
पूजयन्त्यहमस्म्यत्र श्वापदेभ्यो बिभेमि न ॥२३८॥
स्वरूपमर्हतो धर्ममार्हतं च दयापरम् ।
सार्थवाहाय साऽऽचख्यौ स च तं प्रत्यपद्यत ॥२३९॥
निजधर्मविरागेण तं धर्मं तापसा अपि ।
प्रत्यपद्यन्त, को रत्नलाभे काचं न हि त्यजेत् ? ॥२४०॥
सार्थवाहः पुरं तत्र तापसानां प्रबोधतः ।
आख्यया तापसपुरमिति ख्यातं विनिर्ममौ ॥२४१॥
कृतार्थीकर्तुमर्थं स्वं स सार्थेशः समर्थधीः ।
अर्हतः शान्तिनाथस्य तत्र चैत्यमचीकरत् ॥२४२॥
सार्थतापसलोकोऽस्थात् तत्राऽर्हद्धर्मैककर्मठः ।
निशीथे त्वन्यदा भैमी तेजोऽपश्यच्छिलोच्चये ॥२४३॥
आगच्छतो गच्छतश्चाऽद्राक्षीद् देवाऽसुरानपि ।
तत्तथाऽपश्यदुत्पश्यः सुरलोकोऽपि विस्मितः ॥२४४॥
सवणिक्तापसा भैमी समारूढाऽथ पर्वतम् ।
मुनिं केवलिनं तत्राऽपश्यच्च सुरसेवितम् ॥२४५॥

तं वन्दित्वा तदीयांऽह्रिमूले न्यषददादरात् ।
यशोभद्रगुरुस्तस्य तं नत्वा स्थितवान् पुरः ॥२४६॥
सिंहकेसर्यपि ज्ञानी कारुण्यक्षीरसागरः ।
चकार देशनां क्लेशनिर्नाशनमहौषधीम् ॥२४७॥
दुष्प्रापं प्राप्य मानुष्यं कार्यं सफलमादरात् ।
देवपूजादयादानधर्मकर्मविधानतः ॥२४८॥
धर्ममाख्याय स ज्ञानी प्रोचे कुलपतिं ततः ।
भैम्या यः कथितो धर्मः स विधेयः सदा हृदि॥२४९॥
अनया हि तदा रेखाकुण्डे वारिधरो धृतः ।
अस्याः सतीत्वात् सांनिध्यं कुर्वते देवता अपि॥२५०॥
सार्थेशस्याऽस्य सार्थश्च स्तेनेभ्यो रक्षितोऽनया ।
तदियं नान्यथा ब्रूते दवदन्ती महासती ॥२५१॥
तदा च कश्चिदागत्य ततः केवलिनं नतः ।
भैमीमुवाच भद्रेऽस्मिन् वनेऽहं तापसोऽभवम् ॥२५२॥
कर्परो नामतः सोऽहं पञ्चाग्नितपसोत्कटः ।
वचसाऽपि न सानन्दं तापसाः किं नु मां व्यधुः ? २५३
निर्गतोऽहमहंकारात् तत्संत्यज्य तपोवनम् ।
गच्छन् समुत्सुको रात्रौ पतितोऽस्म्यद्रिकन्दरे ॥२५४॥
गिरिदन्तास्फालितस्य दन्ताः सर्वेऽपि मेऽपतन् ।
सप्तरात्रं स्थितो वार्तामपि चक्रुर्न तापसाः ॥२५५॥
गते मय्यभवत् तेषां सुखं प्रत्युत मे ततः ।
तेषामुपरि कोपोऽभूद् गिरिदाहसहोदरः ॥२५६॥
ज्वलत्कोपेन मृत्वाऽहमिहारण्येऽभवं फणी ।
त्वां दंष्टुं धावितोऽपाठि नमस्कारस्त्वयाऽनघे!॥२५७॥
कर्णाऽऽगतेन तेनाऽहं जाङ्गुल्येवान्यतोऽगमम् ।
भेकादिजीवाहारेण जीवामि च बिले स्थितः ॥२५८॥
अन्यदेत्थं कथ्यमानं त्वयाऽश्रौषमहं शुभे! ।

जीवहिंसाकराः पापा जायन्ते दुःखभाजनम् ॥२५९॥
तद्वाकर्ण्याऽहमध्यायं सर्वदा जीवघातकः ।
पापाऽस्माहं द्विजिह्वोऽस्मि का गतिर्भविता मम? ॥२६०॥
एवं च ध्यायतो मेऽभूत्क्षान्तिरुद्वीक्ष्य तापसान् ।
जातिस्मरणतोऽस्मार्षं भवं प्राक्कृतकार्यवत् ॥२६१॥
ततो वैराग्यकल्लोलपरिप्लावितमानसः ।
आहारस्य परीहारमात्मना कृतवानहम् ॥ २६२ ॥
सोऽहं विपद्याऽऽद्यकल्पे देवोऽस्मि कुसुमप्रभः ।
नाम्ना विमाने कुसुमसमृद्धे त्वत्प्रसादतः ॥ २६३ ॥
अभविष्यद् न ते धर्मवचनं चेच्छ्रवोऽतिथिः ।
कुत्राऽगमिष्यं पापात्मा तदाऽहं दुर्गतौ गतौ ॥२६४॥
अवधिज्ञानतो देवि ! ज्ञात्वा त्वामुपकारिणीम् ।
समागमं धर्मशीले ! धर्मपुत्रोऽस्म्यहं तव ॥ २६५ ॥
इत्युक्त्वा तापसानूचे स तापसवरः सुरः ।
मदीयकोपाऽऽचरणं क्षमध्वं परमार्हताः ! ॥ २६६ ॥
प्रोच्येति तद्देहवर्ष्म कृष्ट्वा गिरिगुहागृहात् ।
उद्धृत्योवाच कोपी स्यात् सर्पोऽहं कर्परो यथा २६७॥
तदा परमवैराग्याद् नत्वा केवलिनं मुनिम् ।
तापसानामधिपतिर्ययाचे व्रतमादरात् ॥ २६८ ॥
केवल्याख्यद् यशोभद्रसूरिर्दास्यति ते व्रतम् ।
गुरुर्ममाप्यपृच्छच्च ज्ञानिनं कुलपः पुनः ॥ २६९ ॥
किं तारुण्यभरे दीक्षा गृहीता भावतः प्रभो ! ? ।
केवल्यूचे कौशलेशः कूवरोऽस्ति नलानुजः ॥२७०॥
तस्याऽस्म्यहं सुतः, सङ्गनगरीशश्च केसरी ।
अदाद् मह्यं निजां पुत्रीं बन्धुमत्यभिधानिकाम् ॥२७१॥
पित्राऽऽदेशादहं तत्र गतस्तां परिणीय च ।
अथान्यापच्छता सूरिर्दृष्टोऽयं मूर्तिमान् शमः ॥२७२॥

देशनान्ते मया पृष्टः प्रमाणं निजकाऽऽयुषः ।
पञ्चैव दिवसा इत्याचख्यौ च गुरुरेष मे ॥२७३॥
श्रुत्वेति मां विषण्णाऽऽस्यं प्रेक्ष्य प्राह गुरुः पुनः ।
नाऽभैर्गृहाण दीक्षां त्वं सैकाहमपि मुक्तिदा ॥२७४॥
प्रव्रज्याऽस्मादिहाऽऽयातः पर्वतेऽस्य निदेशतः ।
घातिकर्मक्षयादेव केवलज्ञानमासदम् ॥२७५॥
एवं वदन्नयोगिस्थः केवली सिंहकेसरी ।
हत्वा चत्वारि कर्माणि जगाम परमं पदम् ॥२७६॥
चक्रे शरीरसंस्कारः सुरैस्तस्य शुभाशयैः ।
यशोभद्रान्तिके दीक्षामग्रहीत् तापसाधिपः ॥२७७॥
दवदन्त्यप्युवाचैवं स्वामिन्! दीक्षां प्रदेहि मे ।
अवदच्छ्रीयशोभद्रो भोग्यं कर्माऽस्ति भैमि! ते॥२७८॥
उत्तीर्य पर्वतात् तत्र नगरे पुरवासिनाम् ।
सम्यक्त्वाऽऽरोपणं चक्रे गुरुः श्रीशान्तिमन्दिरे ॥२७९॥
धर्मध्यानपरा वस्त्रगात्रमालिन्यधारिणी ।
गुहागृहान्तरे निन्ये सप्ताब्दीं भीमनन्दिनी ॥२८०॥
कश्चित् पान्थोऽन्यदा तस्यै कथयामास ते पतिः ।
मया दृष्टस्तदाऽऽकर्ण्य साऽभूद् रोमाञ्चदन्तुरा ॥२८१॥
कर्णयोरमृतं कोऽयं निषिञ्चति वदन्त्यदः ? ।
भैमी तमन्वधाविष्ट स तु क्वापि तिरोदधे ॥२८२॥
पान्थस्य च गुहायाश्च सा भ्रष्टा कष्टपूरिता ।
खिन्ना खिन्ना महारण्ये निपपात नलप्रिया ॥२८३॥
वने निपतिता तस्थौ ययौ भूयो रुरोद च ।
किं करोमि क्व यामीति विमृश्य चलिता गुहाम् ॥२८४॥
दृष्ट्वा यान्ती च राक्षस्या मृगी सिंहिकयेव सा ।
प्रसारितवदनया ग्रसिष्य इति चोच्यत ॥२८५॥
भैम्यूचे भव भग्नाशा त्वं राक्षसि! ममास्ति चेत् ।

अर्हन् देवो गुरुः साधुर्जैनो धर्मो नलः पतिः ॥२८६॥
तच्छ्रुत्वाऽस्या महासत्या वचनं तां प्रणम्य च ।
क्षणादन्तर्दधे स्वप्नसमायातेव राक्षसी ॥२८७॥
यान्त्यग्रे निर्जलामेकां नदीमैक्षत भीमजा ।
तृषासंशुष्यत्ताल्वोष्ठी गतनिष्ठीवनाऽवदत् ॥२८८॥
मम चेद् मानसं सम्यक् सम्यग्दर्शनवासितम् ।
तदत्र लोलकल्लोलविमलं जलमस्त्विति ॥२८९॥
इत्युक्त्वा पार्ष्णिना हत्वा भूतलं तत्क्षणाज्जलम् ।
आचकर्ष पपौ तच्च पीयूषपरिपेशलम् ॥२९०॥
ततो यान्ती परिश्रान्ता न्यग्रोधाऽधो न्यविक्षत ।
पान्थाः सार्थाऽऽगता दृष्ट्वा तामूचुः काऽसि सुन्दरि !?॥२९१॥
सोचे सार्थात् परिभ्रष्टा निवसामि वने ननु ।
यास्यामि तापसपुरं तद्वर्त्म मम कथ्यताम् ॥२९२॥
ते प्रोचुः शक्नुमो नैव मार्गं दर्शयितुं वयम् ।
आयान्तीं सह गृह्णीमस्त्वां क्वापि हि पुरे पुनः ॥२९३॥
तां तैः सह गतां सार्थे सार्थेशः करुणाम्बुधिः ।
धनदेवाधिपोऽपृच्छत् काऽसि किं वनवासिनी? ॥२९४॥
भैम्याऽऽख्यद् वणिजः पुत्री पत्या सह पितुर्गृहे ।
चलिता शयिता रात्रौ त्यक्ता तेनाऽस्मि दैवतः॥२९५॥
स्वबन्धुभिरिवैभिश्च त्वदीयपुरुषैः समम् ।
समायातास्मि तत्कापि स्थाने वसति मां नय ॥२९६॥
सार्थनाथोऽवददहं गन्ताऽचलपुरे वरे ।
वत्से ! सह मया गच्छ जनकेनेव निर्भया ॥२९७॥
इत्युक्त्वा तां सार्थनाथो यानस्थामनयत्यधि ।
एकस्मिन्नद्रिकुञ्जे च संनिवेशं न्यवीविशत् ॥२९८॥
भैमी तत्र स्थिता सुप्ता निशि शुश्राव केनचित् ।
पठ्यमानं नमस्कारं सार्थवाहमुवाच तु ॥२९९॥

नमस्कारं पठन् कश्चिच्छ्राद्धः साधर्मिको मम ।
पार्श्वेऽस्य सोदरस्येव गच्छामि भवदाज्ञया ॥२००॥
सार्थेशेन स्वपित्रेव सह भैमी तदाश्रयम् ।
ययौ श्राद्धमपश्यच्च कुर्वाणं चैत्यवन्दनम् ॥२०१॥
अचैत्यवन्दनं तत्र तस्थुषी नलवल्लभा ।
ददर्श च ववन्दे च विनीलं विम्बमर्हतः ॥२०२॥
अपृच्छद् भीमजा भ्रातर्विम्बं कस्यैतदर्हतः ? ।
स आख्यद् यामे ! श्रीमल्लेस्तीर्थपस्य भविष्यतः॥२०३॥
एतद्बिम्बं पूजयामि यतस्तत्कारणं शृणु ।
काञ्चीपुर्यां वणिगस्मि ज्ञानी तत्रैकदाऽऽगमत् ॥२०४॥
धर्मगुप्ताभिधस्तत्रोद्याने स समवासरत् ।
नत्वाऽपृच्छि मया कस्मिंस्तीर्थे मे निर्वृतिर्विभो!?॥२०५॥
सोचे च त्वं दिवश्च्युत्वा मिथिलानगरीश्वरः ।
प्रसन्नचन्द्रो भूत्वा श्रीमल्लितीर्थे हि सेत्स्यसि ॥२०६॥
ततः प्रभृत्यहं मल्लिनाथे भक्तिभरोद्धुरः ।
पटस्थं पूजयाम्येतद्बिम्बं धार्मिकसत्तमे ! ॥२०७॥
इत्याऽऽख्यायाऽवदद् भैमीं स्वसः ! का त्वं कुतोऽसि वा?।
तस्मै श्राद्धाय वृत्तान्तमस्याः सार्थाधिपोऽवदत् ॥२०८॥
श्रावकोऽपि हि तद्दुःखदुःख्यूचे मा कृथाः शुचम् ।
सार्थेशस्ते पिता भ्राता चाहं तिष्ठ सुखेन तत् ॥२०९॥
सार्थनाथोऽपि हि तत्प्रातः प्राप्तोऽचलपुरे पुरे ।
मुक्त्वा भीमसुतां तत्र जगाम स्वयमन्यतः ॥२१०॥
तृषातुरा पुरद्वारवापीमध्यं विवेश च ।
लक्ष्यमाणाऽम्बुहर्त्रीभिः सा साक्षादिव देवता ॥२११॥
वामं तस्याः क्रमं गोधा जग्राह जलमध्यगम् ।
त्रिर्नमस्कारपठनप्रभावेण मुमोच च ॥ २१२ ॥
प्रक्षाल्याऽऽस्यक्रमकरं वारि हारि निपीय च ।

निर्गत्य वाप्यास्तत्प्रान्तवलभ्यां सा न्यविक्षत ॥३१३॥
तत्र राड् ऋतुपर्णोऽस्ति तस्य चन्द्रयशाः प्रिया ।
तत्कुम्भदास्य आनेतुं वारि वाप्यां समागमन् ॥३१४॥
मिथो हसन्त्यो बिभ्रत्यः स्वमूर्धमुकुटान् कुटान् ।
तास्तां निरूपयामासू रूपतो देवतामिव ॥३१५॥
असरूपं च रूपं च वीक्षमाणाः शनैः शनैः ।
विविशुश्च निरीयुश्च निर्निमेषविलोचनाः ॥३१६॥
चेट्योऽथ कथयाञ्चक्रुर्गत्वा परमया मुदा ।
तां देव्यै चन्द्रयशसे प्राप्तां कल्पलतामिव ॥३१७॥
ऊचे चन्द्रयशाश्चेटीः समानयत तामिह ।
चन्द्रवत्याः सुताया मे भविता भगिनीव सा ॥३१८॥
वापीसमीपे यातास्ता नगराभिमुखीं ततः ।
वीक्षामासुर्भीमसुतां मूर्तामब्धिसुतामिव ॥३१९॥
ऊचुश्च, ऋतुपर्णस्य देवी चन्द्रयशोऽभिधा ।
त्वामाह्वयति पुत्रीत्वस्नेहमादधती हृदि ॥३२०॥
तद् देहि दुःखं दुःखेभ्यः स्वामिनीसन्निधे चल ।
छलं ते शून्यचित्ताया भूतादिभ्योऽन्यथा भवेत् ॥३२१॥
इति तद्वचसाऽचालीदालीढा स्नेहतन्तुभिः ।
ताभिर्विनीतवाक्याभिर्भूपावासमनीयत ॥३२२॥
न चन्द्रयशसं मातृष्वसारं वेत्ति भीमजा ।
बाल्यदृष्टां भागिनेयीं देवी चन्द्रयशा अपि ॥३२३॥
दूरतोऽपि परं धर्मपुत्रीप्रेम्णा ददर्श ताम् ।
इष्टेऽनिष्टे च यद् रागविरागौ तनुते मनः ॥३२४॥
गाढं चन्द्रयशोदेव्या सस्वजे नलवल्लभा ।
वैदर्भी तु ववन्दे तत्पादौ विनयवामना ॥३२५॥
पृष्टा देव्या च काऽसि त्वं कथयामास भीमजा ?।
यत्पुरा सार्थनाथाय तदेव हि सवाष्पदृक् ॥३२६॥

देवी भैमीमुवाचाऽथ भद्रे! मम निकेतने ।
पुत्री चन्द्रवतीव त्वं सुखं तिष्ठ शुभाशये[1] ! ॥३२७॥
देवी चन्द्रवतीमूचेऽन्यदा भैमीव भात्यसौ ।
कथमीदृगवस्था स्यात् तस्याः सा हि नलप्रिया ? ॥३२८॥
योजनानां शते सार्धे तस्या आगमनं कुतः ? ।
ततो मदीयजामेयी नेयं, सादृश्यमस्ति तु ॥ ३२९ ॥
सा च राज्ञी चन्द्रयशा ददौ दानं निरन्तरम् ।
दीनदुःस्थितपात्रेभ्यो नगरस्य वहिर्भुवि ॥ ३३० ॥
राज्ञी व्यज्ञपि वैदर्भ्याऽन्यदा दानं ददाम्यहम् ।
अत्र सत्रे कुतोऽप्येति पतिर्यदि पुनर्मम ॥ ३३१ ॥
तदाऽऽद्यपि तदादेशाद् दवदन्ती यथास्थिति ।
ददौ दानं खेदसहा नलाऽऽगमनवाञ्छया ॥ ३३२ ॥
सा प्रत्येकमपृच्छच्चाऽनुदिनं दानवाञ्छिनम् ।
ईदृगीदृक् पुमान् कोऽपि भवद्भिः क्वाऽप्यदृश्यत ? ॥३३३॥
सत्रस्था सान्यदा चौरमपश्यत् तलरक्षकैः ।
वद्धं पुरो नीयमानं रसद्भिरसडिण्डिमम् ॥३३४॥
तलाध्यक्षानपृच्छच्च भीमजाऽनेन कीदृशः ।
अपराधोऽत्र विदधे वध एवंविधोऽस्य यत् ? ॥३३५॥
चन्द्रवत्या जहारैष पापो रत्नसमुद्गकम् ।
तेनासौ कर्मणा वध्यभूमिकां देवि ! नीयते ॥३३६॥
चौरो भैमीं प्रणम्योचे त्राणं स्वामिनि ! मे भव ।
भैम्यप्यभयदानेनाऽभ्यनन्दत् तं मलिम्लुचम् ॥३३७॥
सतीत्वश्रावणापूर्वं त्रिर्जलाच्छोटनेन सा ।
तद्बन्धांस्त्रोटयाञ्चक्रे तुमुलश्चोत्थितो महान् ॥३३८॥
तच्छ्रुत्वा ऋतुपर्णोऽथ जगाम सपरिच्छदः ।
विस्मितः सस्मितं भैमीमवददद् वदतां वरः ॥३३९॥

1 शुभाशयैरित्यपि ।

सर्वत्र क्षत्रधर्मोऽयं नीतिमार्गप्रवर्तकः ।
कार्ये यद् भूभुजा दुष्टशिष्टनिग्रहपालने ॥३४०॥
करं हि गृह्णता राज्ञा रक्ष्यः सर्वोऽप्युपद्रवः ।
अन्यथा तेन पापेन लिप्यते भूपतिः स्वयम् ॥३४१॥
पुत्रि ! चेदस्य चौरस्य निग्रहं न करोम्यहम् ।
तन्निर्भयो जनः सर्वः सर्वस्वं हरति द्रुतम् ॥३४२॥
भैम्यूचे तात ! मद्दृष्टौ चटितः सन् शरीरभृत् ।
मार्येत परमार्हत्यास्तन्मे कीदृक् कृपालुता ? ॥३४३॥
तदयं क्षम्यतां मन्तुर्येन्मां[1] शरणमाश्रितः ।
धर्मपुत्र्या वचनेन तं स्तेनममुचद् नृपः ॥३४४॥
मुक्तमात्रः स तां मेने जननीं नतमस्तकः ।
प्राणदानोपकारं तं स्मरन्नित्यं नमोऽकरोत् ॥३४५॥
भैमी तमन्यदाऽपृच्छत् कोऽसि त्वं कुत आगतः ? ।
स ऊचे तापसपुरे वसन्तस्याऽस्मि कर्मकृत् ॥३४६॥
पिङ्गलो नामतः सोऽहं व्यसनस्यैकमन्दिरम् ।
जग्राह खात्रखननात्तस्य सर्वस्वमन्यदा ॥३४७॥
मार्गे गच्छन् सलोप्त्रश्च लुण्टाकैर्लुण्टितोऽस्म्यहम् ।
स्वगुरुस्वामिमित्रस्त्रीद्रोहिणं कुशलं कियत् ? ॥३४८॥
अत्राऽऽगत्यर्तुपर्णं च सेवमानः कुधीरहम् ।
अपश्यमन्यदा रत्नसमुद्गमहरं ततः ॥३४९॥
स्वमाच्छाद्योत्तरीयेण निर्गच्छन् भूभुजा स्वयम् ।
विज्ञातोऽस्मि न हि प्रज्ञावतामज्ञातमस्ति किम् ॥३५०॥
नृपादेशात्तलाध्यक्षैर्बद्धोऽथ वधहेतवे ।
नीयमानस्त्वामपश्यं मोचितोऽस्मि त्वयाऽनघे ! ॥३५१॥
किञ्च तापसनगराद्गतायामीश्वरि ! त्वयि ।
ज्वरार्त इव तत्याज भोजनं सार्थनायकः ॥३५२॥

---

1 मास्थित इति च ।

संबोधितो यशोभद्रसूरिणा स कथंचन ।
सप्तरात्रोपवासान्ते बुभुजे सपरिच्छदः ॥ ३५३ ॥
वसन्तश्चान्यदा देवि ! गतः कूबरभूपतिम् ।
ढौकनस्य ढौकनेन तुष्टोऽस्मै नरनिर्जरः ॥ ३५४ ॥
दत्त्वा छत्रादिकं चक्रे तं तापसपुरेश्वरम् ।
वसन्तः श्रीशेखर इत्यभिधां चापि भूपतिः ॥३५५॥
विसृष्टो भूभुजा भम्भापिकीस्वराविकस्वरः ।
वसन्तपुरमायासीज्जनचित्तद्रुतोषकृत् ॥ ३५६ ॥
भवदीयप्रसादेन दवदन्ति ! महासति ! ।
राज्यं प्रकुरुते प्राज्यं स तापसपुरेश्वरः ॥ ३५७ ॥
भैम्यूचे निजदुष्कर्ममर्मभेदनकर्मठम् ।
व्रतं गृहाण सोऽप्यूचे करिष्ये तव भाषितम् ॥३५८॥
तत्रायातं साधुयुग्मं प्रतिलम्भ्य च भीमजा ।
अवादीद्यद्ययं योग्यस्तदस्मै दीयतां व्रतम् ॥ ३५९॥
तेन योग्य इति प्रोक्ते ययाचे पिङ्गलो व्रतम् ।
सद्यो देवगृहे नीत्वा प्रव्रज्यां ग्राहितश्च सः ॥ ३६० ॥
अन्यदा कुण्डिनेशेनाऽश्रावि यन्नलभूपतिम् ।
राज्यं द्यूते हारयित्वा कूबरो निरवासयत् ॥ ३६१ ॥
स विवेश महारण्ये दवदन्त्या सहैव हि ।
मृतो जीवति वा नैवं ज्ञायते क्वाऽप्यसौ गतः ॥३६२॥
पुष्पदन्त्यपि राज्ञी तं श्रुत्वा भीमरथाद् नृपात् ।
अरोदीद्रोदयन्ती सा रोदसीं प्रगुरुस्वरम् ॥ ३६३ ॥
ततो भीमरथो राजा हरिमित्राभिधं बटुम् ।
निर्दिदेश प्रतिदिशं तयोः शुद्धिनिबन्धनम् ॥ ३६४ ॥
सर्वत्र शोधयंस्तौ तु सोऽथाऽचलपुरे ययौ ।
अपश्यद् भूपतिं चन्द्रयशसाऽप्रच्छि चाऽऽदरात् ॥३६५॥
कच्चित् सपरिवारायाः कुशलं मामकस्वसुः ? ।

सोऽब्रवीत्कुशलं देव्या नलभैम्योस्तु चिन्त्यताम्॥३६६॥
किं ब्रवीषीति भणितो देव्या वाक्यपटुर्वटुः।
द्यूतप्रभृतिकां कर्णव्यथिकां न्यगदत् कथाम् ॥३६७॥
ततश्चन्द्रयशा देवी रुदती तत्र संसदि।
नेत्रयोः कज्जलमिव प्रमोदं निरवासयत् ॥ ३६८ ॥
तत्सर्वं दुःखितं प्रेक्ष्य बुभुक्षाक्षामकुक्षिकः।
वटुः सत्रं ययौ यस्माद् भोज्यं हि प्रथमं फलम् ॥३६९॥
निविष्टस्तत्र भोज्याय भोज्यशालाधिकारिणीम्।
निजस्वामिसुतां वीक्ष्य तामुपालक्षयच्च सः ॥३७०॥
ववन्दे चरणौ देव्याः स्फुरद्रोमाञ्चकञ्चुकः।
विकासिनयनाम्भोजो विस्मृतक्षुद्वभाव च ॥३७१॥
केयं तव दशा देवि! देवान्निर्वततेऽरिव ?।
यत् भूत्रयसि सत्रेऽत्र कर्म कर्मकरोचितम् ॥३७२॥
दिष्ट्या दृष्टिपथं याता जीवन्तीत्यभिधाय सः।
उत्थायाऽवर्धयच्चन्द्रयशोदेवीमर्थातथीः ॥ ३७३ ॥
अस्ति स्वस्तिमती दानशालायां देवि! भीमजा।
सत्रेऽकुण्ठसमुत्कण्ठाऽऽयाता चन्द्रयशास्ततः ॥३७४॥
देवी चन्द्रयशा भीमनन्दिनीं नेत्रनन्दिनीम्।
आश्लिष्य चिरायातनलिनीमलिनी यथा ॥३७५॥
ऊचे च वत्से! सुव्यक्तैर्लक्षणैर्लक्षिताऽपि हि।
नैवोपलक्षिताऽसि त्वं धिग् मामज्ञानवञ्चिताम्॥३७६॥
त्वयापि हि कथङ्कारं वञ्चितास्मि गतस्मये!।
दुर्दशायामागतायां का लज्जा मातृमन्दिरे? ॥३७७॥
वत्से! नलस्त्वया मुक्तस्त्वं मुक्ताऽसि नलेन वा?।
तेन त्यक्ताऽसि, तं तु त्वं महासति! न मुञ्चसि॥३७८॥
त्वं चेत्त्यजसि दुर्दैवाद्दशायापतितं पतिम्।
ततः सुधारश्मिबिम्बान्मृगाङ्कत्वमनुकरणम् ॥ ३७९ ॥

किमेष नैषधेर्धर्मस्तत्कुले वा कुलीनता ? ।
महासती प्रिया मार्गे त्यज्यतेऽलज्जचेतसा ॥३८०॥
तव दुःखानि गृह्णामि कुर्यां भ्रामणकं तव ।
मम मन्तुं क्षमस्वैनं यन्मया नोपलक्षिता ॥ ३८१ ॥
तमोविधुन्तुदच्छेदः कृष्णपक्षनिशास्वपि ।
क्व वा विशेषको बाले! तव भाले सहोद्भवः?॥३८२॥
इत्युक्त्वा स्वमुखाम्भोजनिष्ठीवनजलेन सा ।
भैम्या ललाटं मार्ष्टि स्म जघ्रौ मूर्ध्नि पुनः पुनः॥३८३॥
शशीवाम्भोदनिर्मुक्तः प्रदीप इव बोधितः ।
विशेषको विशेषेण तत्क्षणं दिद्युते द्युता ॥ ३८४ ॥
ततश्चन्द्रयशा देवी स्वपाणिभ्यां नलप्रियाम् ।
गन्धोदकैरस्नपयत् तां साक्षादिव देवताम् ॥३८५॥
वसने श्वेतमसृणे चन्द्रिकानिर्मिते इव ।
देव्या समर्पिते भैमी ततः परिदधे मुदा ॥ ३८६ ॥
देवी करे गृहीत्वा तां निषसाद सदस्यथ ।
ऋतुपर्णान्तिकेऽयासीत् तदा चास्तं गतो रविः ॥३८७॥
तदा च तमसाऽपूरि निःशेषमपि पुष्करम् ।
वर्षासु वारिपूरेण वामलूर इवाधिकम् ॥३८८॥
सभायां भूपतेर्नैव प्रविवेश तमीतमः ।
वारितं भीमजापुण्ड्रतेजोभिर्वेत्रिभिर्यथा ॥ ३८९ ॥
उवाच राजा यातेऽस्तं पद्मिनीप्राणवल्लभे ।
दीपिकाया अभावेऽपि देवि! कौतस्कुती द्युतिः?॥३९०॥
राज्ञी जन्मोद्भवं भैम्यास्तिलकं तददर्शयत् ।
कौतुकात् तत् प्यधाद्राजा सदश्च तिमिरं तदा ॥३९१॥
दूरेकृत्य ततः पाणिमृतुपर्णनरेश्वरः ।
पप्रच्छ पितृवद्राज्यभ्रंशप्रभृतिकां कथाम् ॥३९२॥

---

१ दिवाकर एतदपि । २ सदसि ध्वान्तमप्यभूत्, इदमपि ।

दवदन्त्यपि हि द्यूतादारभ्याऽकथयत्कथाम् ।
निजनेत्रपयःपूरैस्तन्वन्ती पङ्किलामिलाम् ॥३९३॥
राजा निजोत्तरीयेण तस्याः संमार्ज्य लोचने ।
उवाच वत्से! मा रोदीः कश्चिद्दैवाद्बली न हि ॥३९४॥
अत्रान्तरे सुरः कश्चित् स्वर्गादागत्य संसदि ।
तत्रोचे भीमतनयां विनयाद् रचिताञ्जलिः ॥ ३९५ ॥
स्वामिन्यहं तवादेशात्तस्करः पिङ्गलाह्वयः ।
प्रव्रज्य विहरन् यातः श्रीतापसपुरेऽन्यदा ॥३९६॥
श्मशानमध्ये माध्यस्थ्येनाऽस्थां प्रतिमया ततः ।
चितानलोऽनिलोद्धूतो मद्देहमदहत् तदा ॥ ३९७ ॥
तथापि धर्मध्यानस्थो विधायाऽऽराधनामहम् ।
पिङ्गलो नामधेयेनाऽजनि स्वर्गे सुरोत्तमः ॥ ३९८ ॥
त्वां नन्तुमागतो ज्ञात्वाऽवधिज्ञानाद् महासति! ।
त्वयाऽस्मि रक्षितः साक्षात् शिक्षितो दीक्षितोऽस्म्यहम् ॥
तव पादप्रसादेनाऽऽसदं स्वर्गसदां पदम् ।
इत्युक्त्वा स्वर्णकोटीः स सप्त वृष्ट्वा तिरोदधे ॥४००॥
तच्छ्रुत्वा चाद्भुतं भूपः सप्रत्ययमनत्ययम् ।
अधर्ममर्मण्यथकं प्रपेदे धर्ममार्हतम् ॥ ४०१ ॥
हरिमित्रोऽन्यदा चन्द्रयशसा सहितं नृपम् ।
अनुज्ञाप्याऽनयद् भीमतनयां कुण्डिनं प्रति ॥४०२॥
आगच्छन्तीं सुतां श्रुत्वाऽभ्यागमद् भीमभूपतिः ।
वाजिना वायुवाजेन स्नेहेन च पुरस्कृतः ॥ ४०३ ॥
आयान्तं पितरं वीक्ष्य भैमी चरणचारिणी ।
तत्पदाम्भोजयोः स्मेरमुखाम्भोजाऽपतत्ततः ॥४०४॥
तयोर्मिलितयोर्नेत्रनीरैः प्रसृमरैस्तदा ।
भूरिपङ्काऽभवद् भूमिः पयोदसमये यथा ॥ ४०५ ॥
पुष्पदन्ती तदायातां दवदन्तीं निजाङ्गजाम् ।

आश्लिष्यति स्म सुदृढं राजहंसीव पद्मिनीम् ॥४०६॥
मुक्तकण्ठ च तत्कण्ठे लगित्वाऽरुददुच्चकैः ।
नलप्रिया, भवेद् दुःखमिष्टे दृष्टे नवं यतः ॥ ४०७ ॥
प्रक्षाल्य नयनान्युच्चैर्वारिणा विनिवारणम् ।
चक्रुः परस्परं दुःखसमुद्गिरणपूर्वकम् ॥ ४०८ ॥
पुष्पदन्ती सुतामङ्कमधिरोप्य जगाद च ।
दिष्ट्या दृष्टाऽद्य जीवन्ती भाग्यं नोऽद्यापि [1]वर्तते॥४०९॥
समयं गमयन्त्यास्ते सुखेन न चिरादपि ।
मिलिष्यति नलः सर्व जीवो जीवॅल्लभेत हि॥४१०॥
हरिमित्राय भूपालो ग्रामपञ्चशतीं ददौ ।
पुरे तत्रोत्सवं चक्रे देवगुर्वर्चया समम् ॥ ४११ ॥
विदर्भाधिपतिः प्रोचे वैदर्भीमथ सादरम् ।
नलो मिलिष्यति यथा तथा वत्से ! विधास्यते॥४१२॥
तदा च भीमजां मुक्त्वा परिभ्राम्यन् वने नलः ।
कक्षात् समुत्थितं धूममपश्यद् गगनातिगम् ॥४१३॥
धूमो निमेषमात्रेणाप्यभूत् कीलाकरालितः ।
वने समुद्यत्कुसुमकिंशुकौघभ्रमप्रदः ॥ ४१४ ॥
दह्यमानेषु वंशेषु क्रीडत्सु श्वापदेषु च ।
शब्दाद्वैतमभूत् तत्र कल्पान्तभ्रान्तिकृत्तदा ॥४१५॥
नलो दवानले दीप्तेऽथाऽश्रौषीत् पुरुषस्वरम् ।
रक्ष मां नलभूपालेक्ष्वाकुवंशसमुद्भव ! ॥ ४१६ ॥
अकारणोपकर्तारः सन्तो यदि तदाऽपि हि ।
उपकारं करिष्यामि तुभ्यमभ्यधिकं नृप ! ॥ ४१७॥
मार्गणः शब्दवेधीव तं शब्दमभिजग्मिवान् ।
वदन्तं रक्षरक्षेत्यद्राक्षीत् सर्पं तदन्तरे ॥ ४१८ ॥
नलोऽपृच्छत् कथं वेत्सि मम नामान्वयौ ननु ? ।

1 विद्यते, इत्यपि ।

कुतो वा मानुषी भाषा तवेयं नयनश्रवः ! ? ॥४१९॥
स आख्यदवधिज्ञानात्सर्वं विदितमेव मे ।
प्राग्भवे मनुजोऽभूवं तेन भाषा च मानुषी ॥४२०॥
नलोऽवलोक्य साकम्पं सकृपस्तं सरीसृपम् ।
समाक्रष्टुं निचिक्षेप निजां वल्लीवने पटीम् ॥ ४२१ ॥
भूलग्नमञ्चलं प्राप्य पन्नगोऽत्रेष्टयद् भृशम् ।
पटीलग्नं परसुखोत्कर्षी राजा चकर्ष तम् ॥४२२॥
गत्वा दूरप्रदेशे तं दवस्याऽगोचरेऽमुचत् ।
मुच्यमानेन दष्टश्च पन्नगेन करे नलः ॥ ४२३ ॥
नलोऽवदत्तमाच्छोट्य भवता स्वोचितं कृतम् ।
पयः पाययते योऽपि युष्माभिः सोऽपि दश्यते॥४२४॥
नलस्यैवं ब्रुवाणस्य प्रससर्प विषं तनौ ।
वपुः कुब्जमभूत्तेन वार्धकेनेव बाधितम् ॥ ४२५ ॥
सूक्ष्मक्रमकरग्रीवो लम्बोष्ठः पिङ्गकुन्तलः ।
अकिञ्जरोदरो मूर्त्या बीभत्सोऽभूद्विषाद् नलः॥४२६॥
अचिन्तयच्च रूपेणाऽनेन मे प्राणितं वृथा ।
तद् गृह्णामि वरं दीक्षामप्यक्षयफलप्रदाम् ॥४२७॥
नलस्य ध्यायतश्चैवं मुक्त्वा सर्पः स सर्पताम् ।
दिव्यालङ्कारसम्भारधारकोऽभूत् क्षणात् सुरः ॥४२८॥
ऊचे च मा कृथाः खेदं पिताऽस्मि निषधस्तव ।
दीक्षाग्रहणतो ब्रह्मलोके वृन्दारकोऽभवम् ॥ ४२९ ॥
ज्ञात्वा चावधिनाऽवस्थां तवेमां मायया मया ।
समस्ताङ्गेषु वैरूप्यं विहितं ते हितं ननु ॥ ४३० ॥
दण्डिताः खण्डिता दासीकृताश्च भवता द्विषः ।
ते त्वामनुपलक्ष्यत्वात् पीडयिष्यन्ति नाधुना ॥४३१॥
अधुनाऽपि विधेयो न त्वया दीक्षामनोरथः ।
अद्याऽपि भरतस्यार्धं भोक्तव्यं भवता यथा ॥४३२॥

कथयिष्यामि ते दीक्षादिनं देवज्ञवद् दिनम् ।
अन्यच्च श्रीफलं रत्नकरण्डं च गृहाण भोः ! ॥४३३॥
यदा कार्यं स्वरूपेण प्रस्फोट्यं श्रीफलं तदा ।
दृष्ट्वा तदन्तरे देवदूष्ये रत्नकरण्डकम् ॥ ४३४ ॥
उद्घाट्याऽऽभरणान्यस्य मध्ये वीक्ष्य क्षणादपि ।
परिदध्या यथारूपं देवरूपनिभं भवेत् ॥ ४३५ ॥
( युग्मम् )
अपृच्छत्तं नलस्तात ! क स्नुषा तेऽवदत् सुरः ? ।
ततः स्थानाद् तदुदन्तं विदर्भागमनावधि ॥४३६॥
अवोचच्च नलं वत्स ! किं भ्राम्यसि वनान्तरे ।
यियासति भवान् यत्र तत्र स्थाने नयाम्यहम् ॥४३७॥
( युग्मम् )
नलोऽवोचच्छुंशुमारपुरं प्रापय मां प्रभो ! ।
देव एवं विधायाऽऽशु सुधाशनपदं ययौ ॥ ४३८ ॥
नलोऽपि तत्पुरोपान्तोद्याने चैत्यं व्यलोकयत् ।
तदन्तर्नेमिनाथस्य प्रतिमां प्रणनाम च ॥ ४३९ ॥
शुंशुमारपुरस्याऽन्तर्यावद् विशति कुब्जकः ।
तदालानं समुन्मूल्य भ्राम्यति स्म मतङ्गजः ॥ ४४० ॥
स्फुरन्तं नाधिसेहे स समीरमपि तीरगम् ।
आचकर्ष करेणोच्चैः सनीडनीडजानपि ॥ ४४१ ॥
गजाजीवा गजस्याऽस्य पृष्ठिं दूरेण तत्यजुः ।
उद्यानवृक्षानाक्षेपात् स बभञ्ज प्रभञ्जनः ॥ ४४२ ॥
भूपतिर्दधिपर्णोऽथ क्षिप्रं वप्रोपरि स्थितः ।
मत्तं मतङ्गजं कर्तुमसमर्थो वशंवदम् ॥ ४४३ ॥
अवादीदिति विस्पष्टं गजं यः कुरुते वशम् ।
ददामि वाञ्छितं तस्य कोऽप्यस्ति द्विपाशिक्षकः? ॥४४४॥
कुब्जस्तद्वाक्यमाकर्ण्य करिणं प्रत्यधावत ।

गजश्च गर्जन् पर्जन्य इवाऽभ्यागाद् नलं प्रति ॥ ४४५ ॥
म्रियते म्रियते कुब्ज इति लोके वदत्यपि ।
शिक्षावशेन खेदित्वा वशीचक्रे नलो द्विपम् ॥ ४४६ ॥
वैनतेय इवोत्पत्य तमारूढो मतङ्गजम् ।
आलोक्यमानो लोकेन तदाऽऽश्चर्यस्पृशा दृशा ॥ ४४७ ॥
भूपक्षिप्तस्वर्णमालाराजमानगलो नलः ।
व्यालमालानसंलीनं चक्रे नाड्योत्ततार च ॥ ४४८ ॥
अकृतप्रणिपातः सन्नुपान्ते नृपतेरसौ ।
उपाविक्षदथाऽप्राक्षीदित्थं पृथ्वीपतिर्नलम् ॥ ४४९ ॥
गजशिक्षासुदक्षोऽसि वेत्स्यन्यदपि किञ्चन ? ।
स आचख्ये वेद्मि सूर्यपाकां रसवतीं नृप ! ॥ ४५० ॥
राजा कुब्जाय साश्चर्यं तन्दुलादि तदाऽऽर्पयत् ।
यत्राकृतिस्तत्र गुणा इति व्यर्थं विचिन्तयन् ॥ ४५१ ॥
विद्यां सौरीं स्मरन् मुक्त्वा चरून् सूर्यातपे नलः ।
दिव्यां रसवतीं निष्पादयांचक्रे क्षणादपि ॥ ४५२ ॥
बुभुजे सपरीवारो रसवत्या तया नृपः ।
श्रमच्छिदाकृतानन्दां तामास्वाद्याऽवदच्च सः ॥ ४५३ ॥
नलं विना रसवतीमीदृशीं वेत्ति नापरः ।
पुराऽप्यास्वादिता सेयं सेवमानेन तं मया ॥ ४५४ ॥
तत्किं नलोऽसि नैतादृग् नलः क्रोशशताष्टकात् ? ।
क्वाऽस्याऽऽगमः क्व चैकत्वं क्व च रूपविपर्ययः ? ॥४५५॥
अथ कुब्जाय भूपालोऽदाद् वस्त्राभरणादिकम् ।
टङ्कलक्षमपि ग्रामशतपञ्चकमादरात् ॥ ४५६ ॥
ग्रामग्रामं विमुच्यान्यत् सर्वं जग्राह कुब्जकः ।
राजा जगाद किं कुब्ज ! प्रयच्छामि तवापरम् ? ॥४५७॥
कुब्जोऽवोचद् निजाज्ञायां मद्याऽऽखेटौ निवारय ।
राजाऽपि तत्तथा चक्रे तदभ्यर्थनया समुत् ॥ ४५८ ॥

अन्यदा कुब्जमेकान्तस्थितमूचे क्षितीश्वरः ।
क त्वं कुतः क वास्तव्यो निवेदय ममाग्रतः ? ॥४५९॥
कुब्जश्चाख्यत् कोशलायां नलभूपस्य सूपकृत् ।
हुण्डिकाख्यः, समीपेऽस्य मया संशिक्षिताः कलाः॥४६०॥
नलः पराजितो द्यूते कूबरेणाऽखिलां भुवम् ।
बभूव भैमीमादाय वनवासी मुनिर्यथा ॥ ४६१ ॥
व्यपद्यत नलस्तत्राऽहं तु त्वां समुपागमम् ।
कूबरं न तु शिश्राय गुणहीनं च वञ्चकम् ॥ ४६२ ॥
तया च वार्तया भूपः क्रान्दित्वा करुणस्वरम् ।
नलमेतक्रियां कुर्वन् कुब्जेनैक्ष्यत सस्मितम् ॥४६३॥
दधिपर्णनृपोऽन्येद्युर्दूतं केनाऽपि हेतुना ।
प्रैषीद् मित्रत्ववत्त्वैषी कुण्डिनेश्वरसान्निधौ ॥ ४६४ ॥
दूतोऽन्यदाऽऽख्यद् भीमाय मदीयस्वामिनोऽन्तिके ।
सूर्यपाकरसवतीविदस्ति नलसूपकृत् ॥ ४६५ ॥
तदाकर्ण्य तदोत्कर्णा दवदन्त्यवदद् नृपम् ।
तात ! प्रेष्य चरं विद्धि कीदृग्रूपः स सूपकृत् ? ॥४६६॥
ततः स्वामिसमादेशकुशलं कुशलं द्विजम् ।
समाहूय समादिक्षद् नृपतिर्नलशुद्धये ॥ ४६७ ॥
स पृथुं पृथिवीनाथाऽऽदेशं प्राप्याऽचलद् द्विजः ।
शुंशुमारपुरं प्राप शकुनैः सूचितप्रियः ॥ ४६८ ॥
अव्रजत् कुब्जकाभ्यर्णे प्रच्छं प्रच्छमतुच्छधीः ।
निषण्णश्च विषण्णश्च तं प्रेक्ष्य विकृताकृतिम् ॥४६९॥
अध्यायत् क नलः कैष क स्वर्णं क च पित्तलम् ? ।
तन्नलभ्रान्तिरेतस्मिन् भीमपुत्र्या वृथैव हि ॥४७०॥
निश्चिनोमि तथाप्येनमिति चित्ते विचिन्त्य च ।
नलापश्लोकयुगलं स श्लोकयुगलं जगौ ॥४७१॥
पापिष्ठानां निकृष्टानामसत्त्वानां शिरोमणिः ।

एक एव नलः पत्नीं सतीं तत्याज यो वने ॥४७२॥
ऋजुमेकाकिनीं सुप्तां प्रियामुत्सृज्य गच्छतः ।
विलीनौ भुवि लीनौ वा कथं पादौ न नैषधेः ? ॥४७३॥
पुनः पुनरिति श्रुत्वा पठन्तं तं प्रियां स्मरन् ।
नलो रुरोद नेत्रोदबिन्दुस्यन्दितभूतलः ॥४७४॥
किं रोदिषि द्विजेनेति प्रोक्ते प्रोचेऽथ कुब्जकः ? ।
त्वद्गीतं करुणास्फीतं कर्ण्यमाकर्ण्य रोदिमि ॥४७५॥
द्विजः कुब्जेन पृष्टश्च श्लोकार्थं, न्यगदत् कथाम् ।
द्यूतादारभ्य वैदर्भीगमनं कुण्डिनावधि ॥४७६॥
अन्यच्च शुंशुमारेशदूतो भीमनृपाग्रतः ।
सूर्यपाकरसवतीतत्त्वज्ञं त्वामचीकथत् ॥ ४७७ ॥
श्रुत्वेति त्वां नलं मन्यमाना भैमी व्यसर्जयत् ।
मामहं तु निरीक्ष्य त्वां गताशः खेदमासदम् ॥४७८॥
नलो न त्वामिति व्यर्थो मेऽभूच्छकुनसंचयः ।
पदमेतद् मुधा मन्ये शकुनो दण्डनायकः ॥४७९॥
प्रियां ध्यायन् रुदन् कुब्जो नीत्वा धाम तमब्रवीत् ।
महासत्त्व ! कथाख्यातुः स्वागतं किं करोमि ते ? ॥४८०॥
इत्युक्त्वा स्नपयित्वाऽथ भोजयित्वा च तं द्विजम् ।
नेपथ्यं दधिपर्णेन दत्तं तस्मै ददौ ततः ॥४८१॥
कुशलस्तमनुज्ञाप्य कुण्डिनं पुरमाययौ ।
यथानिरीक्षितं कुब्जमाख्यद् भीमरथाय च ॥४८२॥
कुब्जस्य गजशिक्षादिवृत्तं दानावधि द्विजः ।
श्लोकश्रवणखेदं च भीमभैम्योः पुरोऽवदत् ॥४८३॥
भैम्यूचे तात ! दोषेण कर्मणो भोजनस्य वा ।
रूपं सरूपं न प्राप्तो निश्चितं क्रियया नलः ॥४८४॥
नलं विनाऽस्ति नाऽन्यस्य गजशिक्षासु कौशलम् ।
सूर्यपाकपरिज्ञानं दानं वाऽद्भुतमीदृशम् ॥४८५॥

केनाऽपि तदुपायेन ताताऽत्राऽऽनय कुब्जकम् ।
यथा करोम्यहं तेन तं निरीक्ष्य परीक्षणम् ॥४८६॥
भीमोऽवदत् तवालीकं समारभ्य स्वयंवरम् ।
विसृज्य दूतमाकार्यो दधिपर्णः समुत्सुकः ॥४८७॥
ततस्तेन सहाऽऽगन्ता तत्र श्रुत्वा स्वयंवरम् ।
नारीनिकारं नान्योऽपि सहेत, किमु चेद् नलः ?॥४८८॥
अश्वविद्याविदा तेनाऽऽनेष्यते दधिपर्णराट् ।
महाबलेन न चिरात् तूलपूल इवात्र सः ॥ ४८९ ॥
उक्त्वेति प्रेषितो दूतः शुंशुमारेशमाह्वत ।
श्वो लग्नमिति श्रुत्वाऽभूद् दीनो जालगमीनवत् ॥४९०॥
तच्छ्रुत्वा कुब्जको दध्यौ भैमी नैच्छत् परं पतिम् ।
यदीच्छेत् तर्हि गृह्णीयात् कस्तां मय्यपि जीवति ?॥४९१।
तद् द्रक्ष्यामीति सप्रीतिर्विलक्षं स्वापराधतः ।
पुनः स्वयंवराक्रोधि तदाभूद् नलमानसम् ॥४९२॥
कुण्डिने दधिपर्णं च षड्भिर्यामैर्नयाम्यहम् ।
यथा प्रासङ्गिकं यानमनेन सह संभवेत् ॥ ४९३ ॥
ध्यात्वेत्युवाच राजानं ब्रूहि खेदस्य कारणम् ।
स्थगितानां मौक्तिकानां नार्घः संजायते यतः ॥४९४॥
नृपोऽवदद् यशःशेषो नलोऽभूत् श्वः स्वयंवरः ।
वैदर्भ्या भविताऽऽहूतः षड्याम्या याम्यहं कथम् ?॥४९५।
कुब्जो जगाद भूपाल ! विषादं मा कृथा वृथा ।
अश्वान् समार्पय रथं कुण्डिनं त्वां नये लघु ॥४९६॥
गृहाण स्वेच्छयेत्युक्ते राज्ञा कुब्जोऽग्रहीद् रथम् ।
सर्वलक्षणसंपूर्णौ जात्यावश्वौ च स स्वयम् ॥४९७॥
सर्वत्र विज्ञं विज्ञाय तं दध्यौ दधिपर्णराट् ।
असावनन्यसामान्यो सुरो विद्याधरोऽथवा ॥४९८॥
रथं विधाय युक्ताऽश्वं कुब्जो नृपमवोचत ।

त्वां नेष्यामि रथारूढं निशान्ते कुण्डिनं पुरम् ॥४९९॥
राजा स्थगीभृच्छत्री च कुब्जश्चामरधारिणौ ।
षडप्यमी रथं सज्जं तमारुरुहुरुत्सुकाः ॥ ५०० ॥
तं करण्डं च बिल्वं च संनिबध्य कटीतटे ।
वाहानखेटयत् कुब्जः स्मृतपञ्चनमस्कृतिः ॥ ५०१ ॥
नलेन चाश्वहृद्विद्याविदा स प्राजितो रथः ।
जगाम मनसा सार्धं मनोरथ इवाङ्गवान् ॥ ५०२ ॥
दधिपर्णोत्तरीयं च रथरंहोऽनिलेरितम् ।
साक्षाद् भैमीसमायोगमनोरथ इवापतत् ॥ ५०३ ॥
कुब्जं बभाषे भूपालो विलम्बय रथं क्षणम् ।
उड्डीय यातां वातेन यथा गृह्णाम्यहं पटीम् ॥५०४॥
स्मित्वा कुब्जोऽवदत् काऽस्ति पटी तव धराधव ! ।
पटीपातादतिक्रान्तं क्रोशानां हि शतं हयैः ॥५०५॥
मध्यमौ तुरगावेतौ, भवेतां यदि तूत्तमौ ।
एतावता व्रजेतां तौ ततः क्रोशशतद्वयीम् ॥५०६॥
दधिपर्णोऽथ दूरादप्यक्षवृक्षमुदैक्षत ।
कुब्जमूचे फलान्यस्य कथयाऽगणयन्नपि ॥ ५०७ ॥
व्यावृत्तो दर्शयिष्यामि कौतुकं ते, नलोऽवदत् ।
मा भैमय्यश्वहृद्विद्याविदि कालविलम्बतः ॥५०८॥
एकमुष्टिप्रहारेण नलः फलान्यपातयत् ।
अष्टादश सहस्राणि कथितानि तथाऽभवन् ॥ ५०९ ॥
ददौ कुब्जोऽश्वहृद्विद्यां दधिपर्णाय वर्ण्यधीः ।
विद्यां च फलसंख्यायाः स तस्माद् विधिनाऽऽददे।५१०।
स रथः कुण्डिनाभ्यर्णं यातः प्रातर्नलेरितः ।
निशान्तेऽथ निशान्तस्था भैमी स्वप्नं तदैक्षत ॥५११॥
तत्पित्रेऽकथयच्चैवं जाने निर्वृतिदेवता ।
कोशलोद्यानमानीयाऽदर्शयद् गगनाङ्गणे ॥ ५१२ ॥

आरूढा फलितं चूतं तदादेशात् तयाऽम्बुजम् ।
हस्तेऽर्पितं च मे, पक्षी पुराऽऽरूढोऽपतत् ततः ॥५१३॥
भीमोऽवोचत् सुते ! स्वप्नो मनोज्ञोऽयं तथाह्यसौ ।
देवता पुण्यराशिस्ते उद्यानं राज्यमद्भुतम् ॥५१४॥
चूतारोहः पतिसङ्गोऽपतत् पक्षीव कूबरः ।
प्रातः स्वप्नेक्षणाद्धू मन्ये मिलिष्यत्यद्य ते नलः॥५१५॥
(युग्मम्)
तदा पूर्द्वारगं कश्चिद् दधिपर्णमजिज्ञपत् ।
भीमोऽभ्यागम्य चालिङ्ग्यातिथ्यं कृत्वा तमब्रवीत् ५१६
सूर्यपाकां रसवतीं सूदस्ते वेत्ति कुब्जकः ।
तद् दर्शय ममाश्चर्यं पूर्यतां वार्तयाऽनया ॥५१७॥
दधिपर्णोऽवदत् कुब्जं चक्रे रसवतीं स च ।
भीमोऽपि बुभुजे स्वादं विज्ञातुं सपरिच्छदः ॥५१८॥
स्थालमोदनसंपूर्णं तदानाय्य नलप्रिया ।
बुभुजेऽथ तदास्वादात् कुब्जं ज्ञातवती नलम् ॥५१९॥
पुरा मे ज्ञानिनाऽऽख्यातं भारते सूर्यपाकवित् ।
केवलं नल एवात्र तदयं निश्चितं नलः ॥ ५२० ॥
तदेष तिलकं कुर्वन्निव मां स्पृशतु द्रुतम् ।
नलाङ्गुल्या यतः स्पृष्टाऽहं स्यां पुलकमालिनी॥५२१॥
भैमीवक्षो नलोऽस्पृक्षदङ्गुल्या च क्षणादभूत् ।
वपुः सरोजिनीनालमिवात्युत्कटकण्टकम् ॥ ५२२ ॥
निद्राणाऽहं तदाऽत्याजि यास्यसि क्वाधुना पुनः ? ।
भैमीत्युक्त्वा करे धृत्वा नलं निन्ये गृहान्तरे ॥५२३॥
नलो बिल्वकरण्डाभ्यां वसनाभरणादिकम् ।
परिधायाऽभवत् सद्यः सुरवद् निजरूपभृत् ॥ ५२४ ॥
यथारूपं नलं भैमी ताडयित्वा कटाक्षितैः ।
चित्तचौरं चिरात् प्राप्तं भुजपाशैर्बबन्ध सा ॥५२५॥

पुनर्द्वारि समायान्तं नलमालिङ्ग्य भीमराट् ।
निजे सिंहासनेऽध्यास्य स्मेरास्यकमलोऽवदत् ॥५२६॥
इदं देहमिदं गेहमियं लक्ष्मीरियं सुता ।
त्वदीयं सर्वमप्येतत्तद् ब्रूहि करवाणि किम्? ॥५२७॥
दधिपर्णोऽवदद् नत्वा नलं, नाथोऽसि नाथ! मे ।
तत्प्रसीद ममान्यायकार्यं सर्वं सहस्व तत् ॥ ५२८ ॥
अत्रान्तरे च सार्थेशो धनदेवः समागमत् ।
द्रष्टुं भीमरथं भैम्योपलक्ष्य वहुमानतः ॥ ५२९ ॥
वसन्तमृतुपर्णं च तत्प्रियां तत्सुतामपि ।
सर्वानाऽनाययद् भैमी तत्प्रत्युपचिकीर्षया ॥ ५३० ॥
कृतसत्कृतयस्तेऽथ वन्धुवद् भीमभूभुजा ।
तस्थुः प्रमनसो मासमातिथ्यैर्नवैर्नवैः ॥ ५३१ ॥
अन्यदा तेषु सर्वेषु सत्सु भीमस्य संसदि ।
कश्चिदगाद् दिवो देवः स भैमीमभ्यधादिति ॥५३२॥
भद्रे! कुलपतिः सोऽहं यस्त्वया वोधितः पुरा ।
विमाने केशरेऽभूवं नाम्ना श्रीकेशरः सुरः ॥५३३॥
त्वत्प्रसादादसौ प्राप्ता देवर्द्धिर्वृद्धिवैभवा ।
उक्त्वेति वृष्ट्वा स्वर्णस्य सप्तकोटीस्तिरोदधे ॥५३४॥
भीमर्तुदधिपर्णश्रीवसन्ताद्या नरेश्वराः ।
नलं राज्येऽभिषिषिचुः श्राद्धा विम्वामिवार्हतम्॥५३५॥
स्वानि स्वानि नलादेशाद् वलानि सवलानि ते ।
हेलया मेलयामासुर्भूभुजो भुजशालिनः ॥ ५३६ ॥
ततः परवलद्वेषी मूर्तिमान् मेघवाहनः ।
चचाल पृथिवीपालो नलः सवलवाहनः ॥ ५३७ ॥
दिनैः कतिपयैः सैन्यमदैन्यः संन्यवेशयत् ॥
अयोध्यावहिरुद्याने नामतो रतिवल्लभे ॥ ५३८ ॥

कूवरोऽथ नलं ज्ञात्वा समायातं भयातुरः ।
बभूव गतसर्वस्व इव संशून्यमानसः ॥ ५३९ ॥
नलोऽथ कूवरं प्रोचे पाशैः क्रीड मया समम् ।
द्वयोरपि श्रियोरेकः पतिः कोऽपि भवत्विति ॥५४०॥
मुदितः कूवरो द्यूतं मेने तत्र जिताहवः ।
क्रीडन् नलेन जिग्ये च भाग्येन विजयः करे॥५४१॥
नलेन कूवरः क्रूरो राज्यं जित्वा जितक्रुधा ।
अलंकृत्य निजं राज्यं यौवराज्यमलम्भ्यत ॥ ५४२॥
नलः प्राप्य निजं राज्यं तदा भीमसुतायुतः ।
मुदा दृग्दत्तसैन्यानि पुरीचैत्यान्यवन्दत ॥ ५४३ ॥
कौशलिकान्युपादाय कुशलप्रश्नपूर्वकम् ।
सेवायां कुशला भूपाः कोशलाधीशमभ्ययुः ॥५४४॥
आखण्डल इवाखण्डशासनः खण्डयन् रिपून् ।
त्रिखण्डं भरतं रक्षन् सहस्राब्दीमलङ्घयत् ॥ ५४५ ॥
स्वर्गादागत्य निषधोऽन्यदा नलमबोधयत् ।
न युज्यते रतिः कर्तुं विषयेषु विषेष्विव ॥ ५४६ ॥
प्रव्रज्याकालकथनं प्रतिपन्नं पुरा तव ।
गृहाण तदहो! दीक्षां जीवितव्यतरोः फलम् ॥५४७॥
भवे भवे भवेद् दुःखं यच्चतुर्गतिके भवे ।
तद् द्विधाविषयग्रामत्यजनं भज नन्दन! ॥ ५४८ ॥
निषिद्धो निषधेनैष नैषधिर्विषयान् प्रति ।
इयेष दीक्षामादातुं दातुं पात्रे धनानि च ॥५४९॥
अथ तत्राऽऽगमत् सूरिर्जिनसेनाऽभिधः सुधीः ।
चित्रं यः सावधिर्ज्ञानैः परं निरवधिर्गुणैः ॥ ५५० ॥
तत्र भैमीनलौ गत्वाऽवन्दिषातां तमादृतौ ।
पृष्टः प्राच्यभवावस्थां कथयित्वाऽवदत् पुनः ॥ ५५१ ॥
यशःसुरभि सद्वर्णं स्वादुजन्म क्षपान्तरे ।

साधुप्रदत्तदुग्धात् ते राज्यमाज्यमिवाभवत् ॥ ५५२ ॥
यत्पुनर्द्वादशघटीं खेदितो मुनिपुङ्गवः ।
तदेष विरहो जज्ञे युवयोर्द्वादशाब्दिकः ॥ ५५३ ॥
श्रुत्वेति तौ न्यस्य राज्यं तनये पुष्कलाभिधे ।
गुरोस्तस्माद् व्रतं लात्वा पालयांचक्रतुश्चिरम् ॥५५४॥
भोगेच्छुरन्यदा भैम्यां नलोऽत्यज्यत सूरिणा ।
सुरलोकात् समागत्य निषधेन प्रबोधितः ॥ ५५५ ॥
विदधेऽनशनं कर्तुमसमर्थो व्रतं नलः ।
नलानुरागतश्चक्रे दवदन्त्यपि तत् तथा ॥ ५५६ ॥
नलो मृत्वा कुबेरोऽभूद् भीमजा दयिताऽस्य च ।
तत्रापि हि तयोः स्नेहो महानजनि पूर्ववत् ॥ ५५७ ॥
च्युत्वाऽथ पेढालपुरे हरिश्चन्द्रनृपौकसि ।
भैमी लक्ष्मीवतीकुक्षौ सुता कनकवत्यभूत् ॥५५८॥
स्वयंवरे तां च वरेण्यमूर्तिरथोपयेमे दशमो दशार्हः ।
साधार्मिकी धर्मकथासु लीना कलङ्कहीना समयं निनाय ॥
पौत्रे सागरचन्द्रनामनि बलस्योच्चैर्गते स्वर्गितां
गेहस्थाऽपि भवस्थितिं सविनया सा चिन्तयन्ती मुहुः ।
ज्ञानं केवलमाप्य नेमिनिकटं संप्राप्य मासं दिना-
न्याधायानशनं च निर्वृतिमथ प्रक्षीणकर्माऽगमत् ॥५६०॥
सम्यक्त्वं परिपाति रक्षति जगद् नैवाऽनृतं भाषते
नादत्तेऽन्यधनं ह्यदत्तमिह यो ब्रह्मव्रतं सेवते ।
यो ग्रुन्नं प्रमितं दधाति विनयं धत्ते च साधुव्रजे
सिद्ध्यत्येष जनो यथैष दवदन्त्येभिर्गुणैर्भूषिता ॥५६१॥

इत्याचार्यश्रीविनयचन्द्रविरचिते श्रीमल्लिस्वामिचरिते
महाकाव्ये विनयाङ्के सम्यक्त्वफले दवदन्ती-
महासतीचरितव्यावर्णनो नाम षष्ठः सर्गः ।

अर्हम्

# सप्तमः सर्गः ।



अथ नत्वा जगन्नाथं जगन्नाथपिता नृपः ।
उवाच नाथ ! सम्यक्त्वदृष्टान्तः संश्रुतो मया ॥१॥
अमुष्माद् नाथ ! दृष्टान्ताद् गतवान् मोहविप्लवः ।
मनश्च शुद्धिमज्जातं वैराग्यरसभावितम् ॥ २ ॥
इदानीं श्रोतुमिच्छामि श्रावकाणां व्रतावलीम् ।
अपवर्गसमारोहे दृढां निःश्रेणिकामिव ॥ ३ ॥
श्रीकुम्भभूपते ! मूलं व्रतेषु प्राणिरक्षणम् ।
यद् विना विफलं सर्वमूषरक्षिप्तबीजवत् ॥४॥
जटी मुण्डी तपस्वी च दिग्वासा अरुणाम्बरः ।
शोभते न दयां मुक्त्वा जलहीनं यथा सरः ॥५॥
अहिंसा सर्वजन्तूनां भीतानामभयप्रदा ।
अहिंसा भवसंतप्तोत्तराहृजलदावली ॥६॥
हिंसाया लवमात्रेणोपार्यते पातकं महत् ।
कालकूटकणेनाऽपि नरः किं न विनश्यति ? ॥७॥
प्राणातिपातविरतिं ये कुर्वन्ति विवेकिनः ।
प्रेत्य सर्वश्रियः पात्रं ते भवन्ति सुदत्तवत् ॥८॥
तथाहि मागधेष्वस्ति स्वस्तिवल्लीघनाघनम् ।
पुरं राजगृहं नाम गृहं सकलसंपदाम् ॥ ९ ॥
विश्वविश्वम्भराधीशनिषेवितपदद्वयः ।
विक्रमस्तत्र भूपालस्त्रिविक्रम इव श्रिया ॥ १० ॥
अन्येद्युः सीमभूपालैः प्रान्तो देशः कदर्थितः ।
बन्दिग्राहं च विधृतास्तत्रत्याः कोटिसंचयाः ॥ ११ ॥
स्वदेशमथनं श्रुत्वा तानभिप्राहिणोद् बलम् ।

अध्यासामासुरेतेऽपि दुर्गं दुर्ग्रहमाग्रहात् ॥ १२ ॥
विक्रमस्य बलैस्तेषां ग्रामग्रामा उपद्रुताः ।
अत्युग्रकृतपापानामिह लोकेऽपि यत्फलम् ॥ १३ ॥
सुदत्तग्रामवास्तव्यः सुदत्तो वणिगात्मभूः ।
सप्तवर्षप्रमाणाङ्गो विधृतः केनचिद् हठात् ॥ १४ ॥
अथाऽऽनीतः पुरे राजगृहे राजभटेन सः ।
धृतश्च पूलकं दत्त्वा मस्तकेऽसौ चतुष्पथे ॥ १५ ॥
अन्येन केनाचित् तत्र सुदत्तस्य जनन्यपि ।
तदा विक्रेतुमारब्धा पुरस्तात्पुत्रनेत्रयोः ॥ १६ ॥
स तामुद्वीक्ष्य साप्येनं रुरोद करुणस्वरैः ।
महौषधं हि दुःखार्ते रोदनादपरं नहि ॥ १७ ॥
भङ्गो निजकदेशस्य गोधनस्य परिक्षयः ।
दत्तलभ्यपरिभ्रंशः स्वजनानां परिच्युतिः ॥ १८ ॥
मत्पुत्रो गतभाग्यांशो विधृतो रोरवालवत् ।
एवं विचिन्तयामास सुदत्तजननी तदा ॥ १९ ॥
हा ! निर्वीरेव मन्माता धृताऽनेन चतुष्पथे ।
अचिन्त्या हि गतिः पूर्वकर्मणां हतशर्मणाम् ॥ २० ॥
स्फुटत्युर्वी यदि ततो विशामि क्षितिवेश्मवत् ।
अहं लभे विषं [1]ग्रसामि ततो मोदकलीलया ॥ २१ ॥
तयोश्चिन्तयतोरेवं सुदत्तस्य जनन्यथ ।
तत्क्षणं हृदयस्फोटाद् व्यपद्यत चतुष्पथे ॥ २२ ॥
ततो विशेषतस्तारतरं तरललोचनः ।
सुदत्तो रोदिति स्मोच्चै रोदयन्नपरानपि ॥ २३ ॥
मूर्च्छया न्यपतत् पृथ्व्यां मूल[2]कृत्त इवांह्रिपः ।
एकं हि जननीमृत्युः परदेशागमः परम् ॥ २४ ॥
दयया नागरैः सिक्तो घनैः शुष्यद्वनं यथा ।

---

१ वाऽश्नि, इत्यपि । २ क्षत, इति च ।

लब्धसंज्ञः समुत्तस्थौ सुदत्तो दत्तलोचनः ॥ २५ ॥
राजकीयभटेनाऽपि पृष्टं मूर्च्छानिबन्धनम् ।
दुःखं जगाद निःशेषं जननीमरणावधि ॥ २६ ॥
इतश्च सूद आगत्य मूल्यमेतस्य पृष्टवान् ।
सोऽवोचदेनं मूल्येन न विक्रीणामि सन्मते ! ॥ २७ ॥
एतस्य मूल्यवित्तेन न कर्तास्मि सुरालयम् ।
न न्यूनं पूरणं भावि दारिद्र्योपहतस्य मे ॥ २८ ॥
दुःखितस्याऽस्य नो कर्तुं भृतिर्युक्ता स्वपुत्रवत् ।
परं तुभ्यं प्रयच्छामि स्नेहेनैनं धनं विना ॥ २९ ॥
मुधा संप्राप्य हृष्टः सन् सूदस्तस्माद् न्यवर्तत ।
अगादपि निजावासं भोजयामास तं स्वयम् ॥ ३० ॥
गृहीतो राजसौधेऽसौ सूदेनौदनपक्तये ।
कारितश्च समादेशादिन्धनाऽऽनयनादिकम् ॥ ३१ ॥
प्रस्तावे जगदे तेन हंहो बालक ! लावकान् ।
वंशकम्बादिनिष्पन्नपञ्जराद् निरवासय ॥ ३२ ॥
विदधानो दयां चित्ते पञ्जराद् लावकानसौ ।
अशेषानमुञ्चत् तेऽपि नभसा रभसा ययुः ॥ ३३ ॥
क्षणं स्थित्वा समागत्य पञ्जराद् लावका मया ।
तात ! सर्वे विनिर्मुक्ता यौष्माकीणनिदेशतः ॥ ३४ ॥
इत्युक्तवन्तं तं सूदः कम्बया समताडयत् ।
मुग्धोऽयमिति तं बालं वितर्क निजे हृदि ॥ ३५ ॥
द्वितीयेऽह्न्यमुनाऽऽदिष्टो लावकान् बालकाऽधुना ।
वक्रां ग्रीवां विधायाऽऽशु पञ्जरेभ्यः समानय ॥३६॥
अथाऽसौ तत्र तांस्तेभ्य आकृष्य पूर्ववत्क्षणात् ।
मङ्क्ष्वमुञ्चदशेषांश्च वक्रग्रीवोऽभवत् स्वयम् ॥ ३७ ॥
वक्रग्रीवमम्मुं दृष्ट्वाऽवादीत् सूदः कुतो भवान् ।
वक्रग्रीवः समायातः सोऽवोचदथ मन्दगीः ? ॥ ३८ ॥

यौष्माकादेशतस्तात ! वक्रग्रीवोऽधुनाऽजनि ।
तच्छ्रुत्वेदं दधौ चित्ते डिङ्गिरो डिङ्गिरो ह्ययम् ॥ ३९ ॥
वक्रस्ताडनतः शिष्यो लोभी द्रविणदानतः ।
दुर्दान्तो दारपुत्रश्च मायी त्वावर्जनागुणैः ॥ ४० ॥
विचिन्त्येति कशाघातपातैः शुकलवाजिवत् ।
ताडितः संयतश्चापि सुदृढं केशरज्जुना ॥ ४१॥
ताड्यमानममुं राजा गवाक्षस्थो विलोक्य च ।
कथं सूद ! वराकोऽयं ताड्यते वनजोक्षवत् ? ॥४२॥
तद्वृत्तमवदत् सूदः श्रुत्वा राजापि तत्तथा ।
कोपेन कम्पमानाङ्गो वातकम्पितवृक्षवत् ॥ ४३ ॥
बन्धयित्वा शिशुं राजा गजाग्रे चर्मपुत्रवत् ।
निर्दयं मोचयांचक्रे कृतान्त इव दारुणः ॥४४॥
(युग्मम्)
करेणोत्पाटयामास करेणुस्तं च संज्ञितः ।
निर्घृणं शिक्षिताः प्राज्ञैस्तिर्यञ्चः किं न कुर्वते ? ॥४५॥
इतश्च पृष्टो भूपेन जिजीविषति चेद्भवान् ।
जीवितं हर जीवानामन्यथा मरणं तव ४६॥
सुदत्तोऽथाऽगदद् देव ! भूयाद् मृत्युः करीश्वरात् ।
नाहं प्राणात्ययेऽप्युच्चैः करिष्ये प्राणिनां वधम् ॥४७॥
तद्वचःश्रवणात् तुष्टः पृथ्वीशो वणिगात्मजम् ।
स्नेहस्मेरमुखाम्भोजोऽपृच्छद् गोत्रादिकं च सः ॥४८॥
सुदत्तग्रामवास्तव्यो देवाऽहं वणिगात्मभूः ।
सुदत्तः संज्ञया गर्भश्रावको मृतमातृकः ॥४९॥
देवाऽगलितमर्णश्च पीयते तृषितैर्न हि ।
अशोधितमिन्धनादि क्षिप्यते नो हुताशने ॥५०॥
निशायां भुज्यते नापि पूज्यते भगवान् जिनः ।
वन्द्यन्ते गुरवः श्वेताम्बराः क्षान्तिपरायणाः ॥५१॥

सर्वथा जीवरक्षार्थं यतन्ते कुलजा मम ।
इत्यतो नाधिकं वेद्मि बाल्यतः पृथिवीपते ! ॥५२॥
निशम्येति नृपोऽवोचद् धन्यं श्राद्धकुलं क्षितौ ।
यस्मिन् बाला अपि दयाप्रकृष्टाः शिष्टताजुषः ॥५३॥
बालका अपि यत्रेदृग्जीवरक्षापरायणाः ।
ये पुनर्ज्ञातसिद्धान्तास्ते कीदृक्षाः क्षमातले ? ॥५४॥
प्रशस्येति श्राद्धकुलं सुदत्तं दत्तशासनम् ।
अङ्गरक्षकनेतृत्वे चकार क्षोणिनायकः ॥ ५५ ॥
नृपाङ्गरक्षां कुर्वाणस्तीर्थनाथार्चनोद्यतः ।
कुलीनललनोद्वाही दानशौण्डः प्रशान्तधीः ॥ ५६ ॥
श्रीचन्द्रप्रभतीर्थेशसमीपे श्रावकव्रतम् ।
आदाय विधिना शुद्धं सम्यक्त्वविधिवन्धुरम् ॥५७॥
पर्यन्तेऽनशनं कृत्वा परमेष्ठिस्तवं स्मरन् ।
मृत्वा माहेन्द्रकल्पेऽभूत् तस्माद् निर्वाणमेष्यति ॥५८॥
सुदत्तस्य यथा जातमिहाऽमुत्र श्रियां पदम् ।
तथान्येषामपि भवेत्प्राणिनां वधरक्षणात् ॥५९॥
अथ नत्वा जिनं कुम्भो जगाद रचिताञ्जलिः ।
धन्यः सुदत्तो भगवान् यो बाल्येऽपि दयापरः ॥६०॥
राजन् ! प्राणातिपातस्य विरतेर्भूषणं सदा ।
मृषावादं परिहरेत् द्वैतीयीकमणुव्रतम् ॥६१॥
सत्यं कीर्तिलतामूलं सत्यं पुण्यनदीगिरिः ।
सत्यं विश्वाससौधं च सत्यं लक्ष्मीनिकेतनम् ॥६२॥
यथा पुण्ड्रेण रामाया वक्त्राम्भोजं विभूष्यते ।
यथा गङ्गाप्रवाहेण पूयते भुवनत्रयम् ॥६३॥
यथा च शोभते काव्यं सार्थया पदशय्यया ।
तथा सत्येन मनुज इहाऽमुत्र विराजते ॥६४॥ (युग्मम्)
प्रतिष्ठाः लोकविश्वासप्रत्यया अनृतोदितेः ।

नदीपूरादिव ग्रामाः प्लाव्यन्ते तद्वासिनः ॥६५॥
सत्यवाक्यप्रभावेण भूपालैरपि पूज्यते ।
वसुबन्धुर्यथा श्रेष्ठी धर्मदेवकलौ किल ॥६६॥
तथाहि धरणीवासाभिधानं पुरमुत्तमम् ।
तत्रारविन्दभूपालो विशालो निलयं श्रियः ॥६७॥
वसुबन्ध्वाह्वयः श्रेष्ठी तत्र श्रेष्ठो गुणोत्करः ।
यद्वित्तैर्व्यवहर्तुं वा कौबेरीं धनदोऽगमत् ॥६८॥
वसुभद्रः सुतोऽमुष्य दुर्दान्तसुहृदां गणैः ।
समेतो नगरीं भ्राम्यन् मदमत्त इव द्विपः ॥६९॥
न पितुर्मन्यते शिक्षां नाभ्यस्यति कलाः क्वचित् ।
पर्वण्यपि गुरोः पादौ न ननाम दुराशयः ॥७०॥
अन्येद्युः श्रेष्ठिभूर्वीक्ष्योपक्ष्मापतिनिकेतनम् ।
गृहश्रोतःस्फुरद्भूरिकृमिप्रोन्मत्तकर्दमम् ॥७१॥
देवदूष्यमिवाह्लायोत्तार्य मौलेर्वरां पटीम् ।
श्रोतोऽन्तः कुण्डलीकृत्य क्षिप्तवान् लेष्टुखण्डवत् ॥७२॥
( युग्मम् )

तस्योपरि क्रमौ न्यस्य विहाय चोत्तरच्छदम् ।
अग्रतः प्रससाराऽसौ मदोन्मत्तशिरोमणिः ॥ ७३ ॥
कोऽयमेष इति नरं कञ्चित् पप्रच्छ भूपतिः ? ।
अवादीदेष निःशेषतदीयकुलवेदकः ॥ ७४ ॥
देवाऽयं वसुबन्धोश्च नन्दनो वसुभद्रकः ।
व्यसनोपहतस्त्यागी दुःशिक्षितमदाऽन्धलः ॥ ७५ ॥
ततः कौतुकितो राजा वसुबन्धुमजूहवत् ।
श्रेष्ठिस्तवात्मजः कस्मात्कुलशिक्षाविवर्जितः ? ॥७६ ॥
स्वामिन् ! शिक्षोपदेशांस्तन्नाऽमंस्ताऽयं कथञ्चन ।
कुलक्षये भवन्त्युच्चैः सुता ईदृग्विचेष्टिताः ॥ ७७ ॥

अधृतिं मा कृथाः श्रेष्ठिन् ! विचारय वचो मम ।
भविष्यति कृतोद्वाहः शान्तात्मा तव नन्दनः ॥ ७८ ॥
काचिद् वेत्रधराः ! श्रेष्ठिपुत्रयोग्याऽस्ति दिकरी ? ।
परिणेतुं यद् भवन्तो नागरान्वयवेदिनः ॥ ७९ ॥
अथाऽऽख्यद् वेत्रभृच्चैकः स्वामिन्नत्र पुरे वरे ।
आसीत् श्रेष्ठी गुणी शान्तः पद्मः पद्मविलोचनः ॥८०॥
पद्मादेवीति तस्याऽऽसीत् प्रेयसी कटुभाषिणी ।
मर्मविद्वचसां खानिः जङ्गमः कलिपादपः ॥ ८१ ॥
तयोः शुभङ्करः पुत्रः पवित्राचारभासुरः ।
अल्पकुदलपवाही च गुणमाणिक्यरोहणः ॥ ८२ ॥
तस्याऽभूद् धारिणी नाम धारिणीव स्थिरा गिरा ।
नीरङ्गीसुभगा साध्वी श्वश्रूपादोपजीविनी ॥ ८३ ॥
पद्मातिकर्कशैर्वाक्यैः सर्वलोहमयैरिव ।
वधूं निरागसमपि ताडयामास दुर्मुखी ॥ ८४ ॥
तन्न स्थापयति स्थाले यत्प्रयाति गलात्परम् ।
कृतमासोपवासेव शुभङ्करप्रियाऽजनि ॥ ८५ ॥
आदेशैः कर्मभिः प्राज्यै रोगैरिव कलेवरम् ।
तस्या दग्धमभूत् किं वा जातरोगेव साऽभवत् ॥८६॥
श्वशुरौकः स्वयं त्यक्त्वा स पित्राऽऽवासमासदत् ।
अतिपूर्ण स्फुटत्येव सत्यं लोकवचो यतः ॥ ८७ ॥
वत्से ! श्वशुरवेश्माऽऽशु गम्यतां स्थीयतां तु न ।
तातवेश्मनि पुत्रीणां निवासे वचनीयता ॥८८॥
यान्यक्षराणि रुष्टाऽपि भाषते श्वशुरप्रिया ।
तानि मन्त्राक्षराणीव शुभायेति विचिन्त्यताम् ॥८९॥
इत्यादितातशिक्षां च श्रुत्वा धारिण्युवाच तम् ।
प्रेतधामेव यत्त्यक्तं श्वाशुरं वेश्म सर्वथा ॥ ९० ॥
वल्लरी दवदग्धाऽपि प्ररोहति मुहुर्मुहुः ।

वाचा दग्धः पुनस्तात ! प्रादुर्भवति न क्वचित् ॥९१॥
गृहवासो ममाऽभाग्याद् वनवास इवाजनि ।
क्लिष्टकर्मोदितेः श्वश्रूर्जज्ञे विषमुखी मम ॥ ९२ ॥
तात ! कूपे पतिष्यामि प्रवेक्ष्यामि हुताशने ।
न पुनः श्वाशुरं वेश्म गमिष्यामि कदाचन ॥९३॥
इत्थमाकर्ण्य तद्वाक्यं चक्रे मौनं मुनिर्यथा ।
अति हि व्याहृतं हन्त ! प्राणात्याय प्रजायते ॥९४॥
अथ देवरि संप्राप्ते तामाह्वातुं तदौकसि ।
ऊचेऽथ धारिणी तात ! न गन्तास्मि प्रियौकसि॥९५॥
शिरःकण्डूयनं कृत्वा ज्ञात्वा मातुर्विजृम्भितम् ।
यथागतस्तथाऽऽयातो मौन्यभूच्च गृहे गतः ॥ ९६ ॥
इतश्च–
कस्यचिद्गतचित्तस्य वित्तं दत्त्वा यथारुचि ।
पद्मदेवी निजं पुत्रं पर्यणाययदञ्जसा ॥ ९७ ॥
पूर्ववत् ताडयामास तां वधूं कर्कशैः पदैः ।
स्वभावो यस्य यो लग्नः किं शक्यः कर्तुमन्यथा ?॥९८॥
ततो वधूजनैर्देव ! वधूमारिरिति स्फुटम् ।
अदीयताह्वयस्तस्याः सान्वयं स्वरवत् तदा ॥ ९९ ॥
देव ! तस्याः सुता तद्वत्कालिवल्लीव जङ्गमा ।
पुत्र्यो हि मातृवद् दृष्टाः पुत्राः पितृसमा यथा॥१००॥
अङ्गारशकटीत्युच्चैस्तस्या नाम व्यजृम्भत ।
न कश्चिदुद्वहत्येनां विषकन्यामिवाऽवनौ ॥ १०१ ॥
चेत्तया सह संयोगो वसुभद्रे भविष्यति ।
एकमेव गृहं स्वामिंस्तद् विनश्यति नापरम् ॥ १०२ ॥
अथ स्वयं महीपालो वसुभद्रं स्वपुत्रवत् ।
सार्धमङ्गारशकट्या पर्यणाययदञ्जसा ॥ १०३ ॥
भिन्नश्च विहितः श्रेष्ठिगेहादक्षरपत्रकैः ।

दुर्दान्तानां तनूजानां शिक्षा भवति नान्यथा ॥१०४॥
निष्कलोऽसौ दिनैः स्तोकैरव्ययद् वित्तसंचयम् ।
निर्धनश्चापि संवृत्तो दुर्वृत्तानां हि तत्कियत्? ॥१०५॥
साक्षात् शूलास्वरूपेण कलत्रेण कदर्थितः ।
नाऽभुङ्क्त समये नीरमपिबद् नापि सौख्यतः ॥१०६॥
गृहस्यान्तःप्रविष्टोऽसौ न ब्रूते कृतमौनवत् ।
कलिभीत्या मन्यते च तद्वाक्यं गुरुवाक्यवत् ॥१०७॥
अथ वर्षासु सीरं स वाहयामास दुःखितः ।
निष्कलानां हि कर्माणि कृष्यादि किल भुक्तये॥१०८॥
कदन्नमशनं साऽप्यपराह्णे रुक्षशीतलम् ।
प्रददौ प्रत्यहं पत्यै सोऽप्यभुङ्क्त दिवानिशम् ॥१०९॥
सोऽपरेद्युर्हलक्षेत्रे वाहमानः कृशाङ्गवान् ।
प्राजनेन बलीवर्दं खञ्जं दुर्बलविग्रहम् ॥११०॥
ताडयन्नित्यभाषिष्ट रे रे वृषभ ! सादरम् ।
शीघ्रं परिणाययिष्ये शान्तो मद्वद् भवाऽन्यथा॥१११॥
वाह्यालीविनिवृत्तोऽथ भूपः शुश्राव तद्वचः ।
हंहो वत्स ! कदा तेऽभूद् दुर्दान्तत्वमनुत्तरम् ॥११२॥
स प्रोवाच यदा देव ! त्वयाऽस्मि परिणायितः ।
तदाऽभूद् मम शान्तत्वं तत्त्वं तत्त्वविदो यथा ॥११३॥
इतः प्रभृति यत्किञ्चिद् गुरवो गौरवान्वितम् ।
निदेक्ष्यन्ति विधास्यामि तदहं निरहंकृतिः ॥११४॥
ततः सगौरवं राजा जिनचन्द्रसमुद्भवाम् ।
सुताममृतमुख्याख्यां श्रेष्ठिजं पर्यणाययत् ॥११५॥
सर्वथा मुक्तदौर्गत्यः सर्वथाकृतसत्क्रियः ।
सर्वथा रञ्जितजनः सर्वथाऽभूच्छमादृतः ॥११६॥
विषयान् सेवमानस्य समभूत् तस्य नन्दनः ।
सोमदेव इति ख्याता तस्याऽऽख्या भूभुजा कृता॥११७॥

अन्यदा पोतमारुह्य सोमदेवोऽम्बुधौ गतः ।
परकूलाद् निवृत्तश्च मन्दिरद्वारमाययौ ॥११८॥
पौत्रोत्को गतवांस्तत्र वसुबन्धुर्महाधृतिः ।
पोतस्थमालिलिङ्गाऽऽशु सुतं मूर्ध्नि चुचुम्ब च ॥११९॥
अप्रच्छि स्वस्थचित्तेन मार्गव्यतिकरोऽखिलः ।
चिराय मिलितानां स्याद् वार्ताभिर्यद् महाधृतिः॥१२०॥
पोतेऽत्रैव वणिक्पुत्रं धर्मदेवाभिधाश्रुतम् ।
पप्रच्छ सोमदेवोऽथ किमिदं दृश्यते पुरः? ॥ १२१ ॥
देवाऽयं पुरतो मत्स्यः साक्षादद्रिरिवापरः ।
कुतश्चिद् निश्चलः सम्यग् नायं शैलः शुभाशय ! ॥१२२॥
सोमदेव उवाचाऽथ झषो नायं महामते ! ।
किन्त्वयं पर्वतः कोऽपि यादस्तुल्यो महोदधौ ॥१२३॥
चेदयं भद्र ! मत्स्यः स्याद् मामकीनं धनं तव ।
चेदयं पर्वतो भावी तावकीनः पणश्च कः ? ॥ १२४ ॥
अथेत्थं धर्मदेवेन जगदे प्रमिताक्षरम् ।
मामकीनं शिरस्तेऽस्तु तद्वशे लभ्यभागवत्[1] ॥ १२५ ॥
उभाभ्यां वसुबन्धुश्च साक्षीचक्रे स्वजल्पयोः ।
ततो धर्मोऽक्षिपत् तत्र प्रज्वलत्तृणपूलकम् ॥ १२६ ॥
तत्पृष्ठं पतता तेन संजातं तापितं तिमेः ।
ननाश काकनाशं स वराको लगुडादिव ॥ १२७ ॥
धर्मदेवो धनं तस्य याचते पितृदत्तवत् ।
सोऽपि मौन्यभवत् काममन्यथाक्षिप्तचित्तवत् ॥१२८॥
ततस्तेन महीभर्तुर्गदितं पुरतोऽखिलम् ।
परिभूतेषु भूपालः पितेव परिपालकः ॥ १२९ ॥
हंहो ! युष्मद्विवादेऽभूत् कः साक्षीत्यगदद् नृपः ? ।
अनयोरगदद् धर्मः साक्ष्यस्त्यस्य पितामहः ॥१३०॥

---

१ भागत , इत्यपि ।

वसुबन्धुं समाहूयाऽपृच्छत् क्षितिपतिश्च तत् ।
असौ सत्यमभाषिष्ट तं वृत्तान्तं सविस्तरम् ॥ १३१ ॥
अस्य सत्यवचः श्रुत्वाऽभ्यधादथ महीश्वरः ।
अहो ! सूनृतगीः श्रेष्ठी अहो ! व्रतविवेचनम् ॥१३२॥
कौस्तुभेन यथा वक्षो भूष्यते केशिशासितुः ।
तथा सत्येन मनुजो वक्षःस्थेनाऽकलङ्किना ॥ १३३ ॥
जरामरणकल्लोलः प्रत्यूहव्यूहवारिधिः ।
विष्वक्प्रवहणेनेव सत्यवाक्येन तीर्यते ॥ १३४ ॥
धर्मवानपि विज्ञोऽपि सूनृतेतरभाषणात् ।
न नन्दति निरानन्दो मन्त्रपाठी यथाऽशुचौ ॥ १३५ ॥
असारे भवेऽमुष्मिन् सारो सूनृतगीरहो ! ।
क्षाराम्बुधाविव क्षीरकूपिका तर्पिकाऽधिकम् ॥ १३६॥
प्रशस्येत्यवदद् धात्रीपुङ्गवः श्रेष्ठिपुङ्गवम् ।
पौत्रस्यार्थे कथं नोक्तं भवता सूनृतेतरत् ? ॥१३७॥
स्वामिन् ! श्वेताम्बराचार्यद्रुमघोषपदान्तिके ।
गृह्णता भावतः सर्वव्रतानि बहुभेदतः ॥१३८॥
विशेषतो व्रतेऽप्यस्मिन् निश्चयो विदधे मया ।
असावेतर्हि यौष्माकादेशतः परिपालितः ॥ १३९ ॥
अथ सत्कृत्य भूपालस्तद्भाले स्वर्णपट्टकम् ।
सत्यस्य सूचकं बद्ध्वा गृहे स्वयममोचयत् ॥१४०॥
ततः प्रभृति स श्राद्धव्रतानि परिपालयन् ।
कल्पं लान्तकमासाद्य भरते मोक्षमेष्यति ॥१४१॥
नृनाथोऽथ जगन्नाथं नत्वा कुम्भोऽभणत्तराम् ।
वसुबन्धुः कृतार्थोऽयं यः सत्यव्रततत्परः ॥ १४२ ॥
अथाऽप्रकाशयद् नाथस्तार्तीयीकमणुव्रतम् ।
अदत्तादानविरतिलक्षणं शुभलक्षणम् ॥ १४३ ॥
परद्रव्यमतिः प्रायः प्राणी स्यात् कर्मगौरवात् ।

पश्य सोमोऽपि पद्मिन्याः श्रियं हरति रात्रिषु ॥१४४॥
परद्रव्याऽपहर्तारः कर्तारः कर्मवैभवम् ।
हन्तारः प्राप्तकीर्तीनां यातारो नरकावनीम् ॥१४५॥
अदत्तादाननिरतास्ते लभन्ते शुभेतरद् ।
शृणु भव्य ! प्रबोधाय संगमकानिदर्शनम् ॥ १४६ ॥
तथाह्यैरावते क्षेत्रे नगरे सोमपत्तने ।
अभूद् भूमीश्वरश्चन्द्रकेतुः केतुरिव द्विषाम् ॥ १४७ ॥
क्षत्रियायाः सुतस्तत्र वास्तव्यः संगमाभिधः ।
पञ्चवत्सरदेशीयः समभूद् घस्मरोऽनिशम् ॥ १४८ ॥
अन्येद्युर्बभणे तेन देहि मातस्तिलान् मम ।
साऽप्याख्यत् खलतो गत्वा गृहाण निजयेच्छया॥१४९॥
न मे तिलपतिस्तातो न बन्धुर्न च मातुलः ।
न पितृव्यः पतिर्वाऽपि कथं दास्यति सोऽवदत् ? ॥१५०॥
जनयित्र्या ततः कण्ठस्नानं सैष विधापितः ।
सोऽप्यार्द्रविग्रहस्तत्र गतवान् प्रमितैः पदैः ॥ १५१ ॥
श्येनपातं पपातोच्चैस्तत्र तेष्वथ संगतः ।
लुठति स्म तरां श्रान्ततुरङ्गम इवाधिकम् ॥ १५२ ॥
आः पाप ! बालकक्रीडां कथमत्र विधास्यसि ? ।
जनैस्ताड्यमान इति स मन्दं प्रासरत् ततः ॥ १५३ ॥
धुत्वा धुत्वा शरीरं सोऽपातयद् भुवि तांस्तिलान् ।
जनन्याऽथ प्रमार्जिन्या ते च पुञ्जीकृताः क्षितौ ॥१५४॥
जाता सुखादिका तस्य लब्धोपायस्तदर्जने ।
एवं दिवानिशं कुर्वन् जातास्वादः प्रगल्भते ॥ १५५ ॥
कालक इति पौरश्च मुच्यमानो दिवानिशम् ।
क्रमशस्तस्करो जातो दुर्ग्राह्यो भटकोटिभिः ॥ १५६ ॥
गर्तावत्परिखां जानन् सखीमपि महोदधेः ।

१ मन्वन्, इत्यपि ।

सौधान्यपि क्षणाद्धूलीपुञ्जानीव व्यलङ्घयत् ॥१५७॥
कदाचिद् मौनभागेष कदाचिद् भिक्षुकक्रियः ।
कदाचिद् धनदः श्रीभिः कदाचिद् नाट्यकारकः॥१५८॥
सर्वरूपधरः सोऽभूद् विद्यासिद्ध इवावनौ ।
कृतह्वानोऽम्बया रागात् सूर सूर इति स्फुटम्॥१५९॥
अन्येद्युर्मातुलस्तस्य यशोनागोऽभिधानतः ।
एकान्ते शिक्षयामास तं विनेयं गुरुर्यथा ॥ १६० ॥
वत्स! स्वच्छाशय! त्यक्तुं चौर्यं साम्प्रतमेव ते ।
परद्रव्यहरा नूनं छिद्यन्ते ऋजुवृक्षवत् ॥ १६१ ॥
मार्यन्ते विविधैर्मारैः क्रीडायां शारयो यथा ।
ताड्यन्ते च कशाघातैस्तुरङ्गा इव सादिभिः ॥१६२॥
एतावन्ति दिनान्युच्चैर्यत्कृतं सुन्दरेदृशम् ।
तद् बालत्वाद् मया क्षान्तं बाला अज्ञा इति श्रुतिः।१६३।
एतद्वचांस्यनाकर्ण्य प्रासरद् निजकर्मणि ।
किं विधत्ते यतोऽन्धानां प्रदीप्ता दीपकोट्यपि?॥१६४॥
तत्रवास्तव्यभद्राख्यसार्थवाहमहौकसि ।
खात्रं पातयितुं सज्जो न प्रापोपायनं च सः॥१६५॥
ऊर्ध्वस्थाः सुभटा विष्वग्भित्तयः फलकाङ्किताः ।
खात्रदाने कुतो हेतुर्निर्हेतुः सोऽप्यजायत ॥ १६६ ॥
अन्येद्युर्भद्रवित्तेशो विषयं चन्दनं गतः ।
पदातिरिव तत्पृष्ठे संगमोऽपि हि संगतः ॥ १६७ ॥
तत्र गत्वेदृशीं चक्रे वार्तां क्वापि महामतिः ।
भद्रस्य मुषितं गेहं खात्रदानेन केनचित् ॥ १६८ ॥
किंवदन्ती च सा पौरप्रणाल्या भद्रसन्निधौ ।
अगादाख्यत सोप्युच्चैर्न ह्येतद् घटते क्वचित् ॥१६९॥
परं कोशस्य कोणोऽस्ति जर्जरो दक्षिणेतरः ।
तत्र संभाव्यते खात्रसंभवोऽन्यत्र न क्वचित् ॥ १७० ॥

तद्वचो मन्त्रवच्छ्रुत्वा ववले नगरं प्रति ।
रात्रौ खात्रमदासीच्च तत्र स्मेराम्बुजाकृतिः ॥ १७१ ॥
गृहीतभद्रवित्तोऽसौ तत्राऽस्थाद् निर्भयाशयः ।
इभ्योऽप्यगाच्च वेगेन तदैवादौ निरैक्षत ॥ १७२ ॥
अद्यैव पातितं खात्रं निशायां नाथ ! केनचित् ।
इत्यारक्षकवाक्यानि श्रुत्वोचे वणिजां पतिः ॥ १७३ ॥
ह्यस्तनेऽह्नि मयाऽश्रावि यत् खात्रं ते महौकसि ।
पातितं तदद्य सत्यं जातं भाग्येतरोदयात् ॥ १७४ ॥
तद्धूर्तक्रीडितं किञ्चिच्चिन्त्यते धीविलोकनात् ।
यद् दैवैरपि दुर्जेयं तत्साध्यं बुद्धिवैभवात् ॥ १७५ ॥
अक्षतैरिव रत्नौघैः भृत्वा स्थालं महीपतेः ।
प्राभृतीकृत्य तत्खात्रवृत्तमाख्यत वित्तवान् ॥ १७६ ॥
तदाकर्ण्य नृपः कोपारुणदारुणलोचनः ।
समाकार्य तलारक्षं साक्षेपमिदमब्रवीत् ॥ १७७ ॥
रे रे तलाधिपाऽशेषं त्वयि सत्यपि तस्करैः ।
अनाथमिव मे नूनं पत्तनं परिमोष्यते ॥ १७८ ॥
सोऽवदद् तद्ग्रहे नाथ! उपाया बहवः कृताः ।
परं न क्वापि संप्राप्तः समुद्रक्षिप्तचूर्णवत् ॥ १७९ ॥
सप्ताहाद् देवपादानां पुरश्चौरमुपानये ।
अन्यथा तेन दण्डेन दण्डो मम विधीयताम् ॥१८०॥
ततः प्रभृति सातत्याद् भ्राम्यन् नगररक्षकः ।
स्थूलाङ्गं पुरुषं कञ्चिद् भ्रमन्तं दृष्टवान् पुरे ॥१८१॥
तं दूरस्थस्तलाध्यक्षो वीक्षमाणः पदे पदे ।
मध्याह्ने द्विजवेषेण यान्तमिभ्यमहौकसि ॥ १८२ ॥
सन्ध्यायां कृतनेपथ्यं सामन्ततनयायितम् ।
निरीक्ष्य ज्ञातवानेष चौरबुद्धिर्हि सिद्धिकृत् ॥१८३॥
( युग्मम् )

स बद्धो वर्हिबन्धेन ततो नीतो नृपान्तिके ।
पपात भद्रनामाङ्कमुद्रा तद्वस्त्रमध्यतः ॥ १८४ ॥
नृपाऽऽदेशात् तलाध्यक्षः शूलायामेनमक्षिपत् ।
इतश्चाऽजानती तत्राऽऽगमत्तस्याऽम्बिका पुरः ॥१८५॥
शूलमोतं सुतं दृष्ट्वा कालरक्षःकटाक्षितम् ।
चक्रेपलायां सा भीता पान्थो दुःशकुनादिव ॥१८६॥
हंहो! तलाध्यक्षनराः ! इमां रण्डां मदन्तिके ।
समानयत, वेगेन कथयिष्ये धनं हि वः ॥१८७॥
कोकूयमाना खरवत्साऽऽनीताऽजा वृकैरिव ।
रे रण्डे ! तव दुःशिक्षाफलं मम विजृम्भितम् ॥१८८॥
भक्षके यद्यरक्षिष्यस्तिलस्तैन्यपरं हि माम् ।
तदा नैवंविधोऽनर्थो निरपत्स्यत मेऽधुना ॥१८९॥
दुस्त्यजो बाल्यसंस्कारो नीलीराग इवाम्बरे ।
अहं त्वयोपेक्षितश्च मारितश्च त्वयैव हि ॥१९०॥
इत्युक्त्वा बाहुदण्डाभ्यां विधृत्याम्बां दुराशयः ।
घ्राणं चिच्छेद दन्ताग्रैः कर्णावपि च मूलतः ॥१९१॥
इति कृत्वा स रौद्रात्मा रौद्रध्यानकदर्थितः ।
जगाम सङ्गमो धूमप्रभाख्यां नरकावनीम् ॥१९२॥
अदत्तग्रहणे राजन्! फलमीदृग् विलोक्यते ।
तस्मात्परधनत्यागः कर्तव्यो हितमिच्छुना ॥१९३॥
उवाचाऽथ धरानाथः श्रुत्वाऽमुष्य निदर्शनम् ।
अस्माकं कम्पते चित्तं वाताऽऽन्दोलितकेतुवत् ॥१९४॥
केषाञ्चिदाधिपत्येन महेशानां निरागसाम् ।
सर्वस्वं जगृहेऽस्माभिः खानयित्वा गृहाण्यपि ॥१९५॥
केचिद् बाला अपि च्छिन्नाः केचिदुन्मीलितास्तताः ।
वृक्षा इव परोलक्षा मया वार्धकिना यथा ॥१९६॥
सर्वस्वं हरता तेषां यत्कर्मोपार्जितं मया ।

तद्भस्मसात्करिष्यामि त्वत्पादरजसाऽञ्जसा ॥१९७॥
अथ व्याख्यानयद् विश्वनाथस्तुर्यमणुव्रतम् ।
अब्रह्मविरतिर्नाम माहात्म्यद्रुघनाघनः ॥१९८॥
केचिद् नवेऽपि तारुण्ये वृद्धा इव विवेकिनः ।
अनाचारे न वर्तन्ते शीलमालिन्यशङ्कया ॥१९९॥
वित्तापहारदुःखानि नानाकारकदर्थनाः ।
अङ्गप्रत्यङ्गविच्छेदाँल्लभन्ते पारदारिकाः ॥२००॥
विश्वासवसतिः शीलं शीलमुन्नतिकारणम् ।
सर्वसौख्यनिधिः शीलं शीलं कीर्तिनदीगिरिः ॥२०१॥
अहार्यं मण्डनं शीलं शीलं सर्वाङ्गभूषणम् ।
शीलं सर्वज्ञधर्मद्रोर्मूलं शीलं श्रियः पदम् ॥२०२॥
शीलव्रतगुणाऽऽकृष्टा देवा अपि हि पत्तिवत् ।
आयान्ति स्मृतिमात्रेण प्रयान्ति च विसर्जनात् ॥२०३॥
स्वकीयदारसंतोषं ये भजन्ति दृढव्रताः ।
तेषां सुदर्शनस्येव शूला सिंहासनं भवेत् ॥२०४॥
तथाहि भरते वर्षे विषयेऽप्यङ्गनामनि ।
चम्पानाम पुरी तत्र भूपालो दधिवाहनः ॥२०५॥
देवी तस्याऽभया नाम धाम लावण्यसंपदाम् ।
धात्री पात्री च बुद्धीनाममुष्याः पण्डिताह्वया ॥२०६॥
श्रेष्ठी वृषभदासाख्यस्तत्रासीद् धाम संपदाम् ।
अर्हद्दासीति सत्यार्था तस्य पत्नी पतिव्रता ॥२०७॥
अमुष्यर्षभदासस्य सदयः प्रियभाषकः ।
महिष्या रक्षकः शान्तः सुभगः सुभगाशयः ॥२०८॥
अन्येद्युश्चारयित्वा स महिषीर्वलितस्तदा ।
अपश्यत् तपसा क्षामं मुनिं शममिवाङ्गिनम् ॥२०९॥
यत्रास्तमितवासत्वात्कायोत्सर्गपरायणम् ।
सोऽपश्यच्च महासत्त्वं पुरीपरिसरेऽपि हि ॥२१०॥

तं वीक्ष्याचिन्तयदसौ धन्योऽयं पुण्यभागयम् ।
यः पूः पितृवनेऽत्रात्सीदेकाकी खड्गिशृङ्गवत् ॥२११॥
तपस्तेजोऽस्य वीक्ष्येव दिनान्तेऽप्यविनश्वरम् ।
ममज्ज भानुमानब्धौ, किं न कुर्वीत लज्जितः? ॥२१२॥
दृष्टिप्रचारं रुन्धाना लुण्टाकी पदवेः सताम् ।
कुमहीपतिसेवेव रुरोधाशां तमस्ततिः ॥२१३॥
विकाल इति विज्ञाय गृहीत्वा माहिषं ततः ।
स्मरन् मुनिपदाम्भोजमगमद् निजमन्दिरम् ॥२१४॥
महिषीदोहनाद्यानि स्वकर्माणि विधाय सः ।
अस्वाप्सीदुचिते स्थाने पलालालीकरालिते ॥२१५॥
अहो ! करालः शिशिरस्तुषारकणवर्षकः ।
दहन् कमलिनीखण्डं खण्डीकुर्वल्लताततीः ॥ २१६ ॥
निर्वातवासवेश्मस्था ऊरीकृतहसन्तिकाः ।
अमुं शीतमृतुं सौख्याद् गमयन्ति धनेश्वराः ॥२१७॥
अस्मादृशास्तु तैलेन दिग्धाङ्गाः कन्थयाऽन्विताः ।
पलालशयनस्याऽन्तर्गमयन्ति महानिशाः ॥२१८॥
स यतिः प्रावृतो नैव यथाजात इव स्थितः ।
सहिष्यते कथं शीतं दुःसहं सहसा कृतम्? ॥२१९॥
तदाऽहं निजया पट्या प्रावरिष्यं मुनिं यदि ।
इदं शीतं महासत्त्वोऽलङ्घयिष्यदसंशयम् ॥ २२० ॥
विमृशन्निति कृत्यानि विनिर्माय स सादरम् ।
मुनिपादरजःपूतं तं प्रदेशमगादथ ॥ २२१ ॥
अत्रान्तरे दिशां चक्रं द्योतयन् संहरंस्तमः ।
पूर्वभूधरमाणिक्यमुदियाय नभोमणिः ॥ २२२ ॥
नमोऽर्हद्भ्य इति प्रोच्य सोऽपि साधुः खगेन्द्रवत् ।
अमुष्य वीक्षमाणस्य विहायस्तलमासदत् ॥२२३॥
अहो ! अभाग्यपात्राणामद्य मुख्योऽस्मि निश्चितम् ।

येनाऽसौ वन्दितो नैव नास्माद्धर्मोऽपि संश्रुतः ॥२२४॥
अथवा येन मन्त्रेण नभोऽगादेष पावनः ।
स मया शुश्रुवे सम्यक् तस्मादस्मि कृतार्थहृत् ॥२२५॥
ममाप्यम्बरचारित्वं भविता मुनिराजवत् ।
नमोऽर्हद्भ्य इतीयन्ति पठति स्माक्षराणि सः॥२२६॥
भोजनावसरे रात्रौ शयानो जाग्रदप्यथ ।
अमुमाघोषयामास प्रकृत्या भद्रकाशयः ॥ २२७ ॥
अन्यदा श्रेष्ठिनः पत्नी भणन्तममुमुच्चकैः ।
श्रुत्वा रे पाप! मन्त्रं नो हससीति स्म भाषते॥२२८॥
नाहं मातरमुं मन्त्रं हसामि शपथा मम ।
किन्त्वस्य लाभमङ्गल्यं प्रसद्य निखिलं शृणु ॥२२९॥
ततस्तापोधनं वृत्तं सुवृत्तस्तमचीकथत् ।
तत्तथेति तयाऽज्ञायि भाषितं तस्य सत्यतः ॥२३०॥
आद्योऽयं सर्वमन्त्राणां विद्यानां वसुसंपदाम् ।
मङ्गल्यानामशेषाणां निःश्रेयसश्रियामपि ॥२३१॥
तदहो! शोभने स्थाने शुचिभूतेन भावतः ।
ध्यातव्योऽयं महामन्त्रः कल्पद्रुरिव जङ्गमः ॥२३२॥
मातर्मा कल्यसंपूर्णममुं शिक्षय सुन्दरम् ।
तयाऽथ पाठितः पञ्चपरमेष्ठिस्तवोऽखिलः ॥२३३॥
इतश्च ग्रीष्मवेतालसमुच्चाटनयन्त्रवत् ।
व्यानशे व्योम मेघानां पटलं गवलद्युति ॥२३४॥
श्रूयन्ते केकिनां केकाः कामं कर्णमुदां पदम् ।
पान्थानां गमनच्छेदकामाज्ञा इव सर्वगाः ॥२३५॥
धाराबाणैरब्दयोधा यदविध्यन् धनुर्भृतः ।
तदश्रुमिषतः पान्थनेत्रयोर्लक्ष्यते जलम् ॥२३६॥
मृदां गन्धाद् भवन्ति स्म मातङ्गा उन्मादिष्णवः ।
किं चित्रं यत्प्रमोदन्ते मलिना मलिनोदये ॥२३७॥

विहाय पद्मिनीं भृङ्गा निषेवन्ते स्म मालतीम् ।
संपूर्णं सेवते सर्वो रिक्तं त्यजति दूरतः ॥ २३८ ॥
मन्दं वर्षति पर्जन्ये स समादाय माहिषम् ।
अर्वाक् चारयितुं व्यूढं गङ्गायाः कूलमासदत् ॥२३९॥
अथ पाथोधरः पाथोधाराभिर्धरणीं तथा ।
अपूरयद् यथा निम्नस्थलाद्यं नाप्यलक्ष्यत ॥ २४० ॥
कृकाराकारविद्युद्भिर्दीप्रदीपायितं ततः ।
कज्जलश्यामलैः कामं दुर्दिनैः शर्वरीयितम् ॥२४१॥
नीडेषु नीडजा मूकीभूता विद्युद्भयादिव ।
लपन्ति चातका विष्वक् प्रत्यब्दं याचका इव ॥२४२॥
वाहा अपि नदीयन्ते सरिन्नाथन्ति निम्नगाः ।
अभूद् भूः पाथसां पात्रमेकं कल्पान्तवत् तदा ॥२४३॥
कम्बलप्रावृततनुः सुभगो नागवेश्मनि ।
चिरमस्थाद् महिष्यश्च नद्याः कूलं परं ययुः ॥२४४॥
कपिञ्जलकलकलै रात्रिं विज्ञाय भाविनीम् ।
तस्माद् निर्गत्य ता विष्वग्वीक्षमाणः स सैरभीः ॥२४५॥
बुद्ध्या विज्ञाय गङ्गायाः परकूलं ममाधुना ।
महिष्यश्चरितुं प्राप्ताः सांप्रतं किं नु सांप्रतम् ?॥२४६॥
विमृश्येति स्मरन्मन्त्रं नमोऽर्हद्भ्य इति श्रुतम् ।
अविक्षत् स्वर्धुनीं वारिस्फारस्फूत्कारदारुणाम्॥२४७॥
यस्यां वृक्षा महान्तोऽपि मूलोन्मूलितसंपदः ।
शरारिवत् तरन्त्युच्चैः स्थानभ्रंशे कुतः स्थितिः? ॥२४८॥
तीरग्रामगृहाण्युच्चैर्बभुर्यत्र तरन्ति च ।
मुक्तानीव विमानानि मेघदेवैः सहोदकैः ॥ २४९ ॥
पयोभिर्गृह्यमाणानां जनानामार्तनिस्वनाः ।
श्रूयन्ते दण्डभृच्चण्डमङ्गलातोद्यनादवत् ॥ २५० ॥
तत्प्रासरथप्रायः सुभगस्तारकोत्तमः ।

विद्धोऽतितीक्ष्णकीलेन शूलाप्रोत इवाजनि ॥२५१॥
स्मरन् पञ्चनमस्कारं सद्वृतेः शासनोपमम् ।
सुभगः प्राप पञ्चत्वं दुर्लङ्घ्या भवितव्यता ॥ २५२॥
वृषभश्रेष्ठिभार्याया अर्हद्दास्यास्ततस्तदा ।
बभूव स सुतत्वेन सुभगः स्वप्नसूचितः ॥२५३॥
जिनानामर्चनां कुर्वे दीने दानं ददामि च ।
पात्रं वित्ते वितरामि गुप्तैर्मुञ्चामि बन्दिनः ॥२५४॥
दोहदमिदमेतस्याः विज्ञाय स्वानुसारतः ।
अमारिघोषणापूर्वं तत्सर्वं श्रेष्ठ्यपूरयत् ॥२५५॥
अथ जाते सुते श्रेष्ठी महोत्सवमनोरमम् ।
सुदर्शन इति प्रीत्या सत्यार्थं नाम निर्ममौ ॥२५६॥
देहेन स कलाभिश्च वर्धमानो दिने दिने ।
नयनानन्दजननो रजनीश इवाजनि ॥२५७॥
पुरन्ध्रीणां मनःपद्मसमुल्लासनभास्करम् ।
वनं काममहे तस्य स यौवनमुपेयिवान् ॥ २५८ ॥
ततः सागरदत्ताख्यश्रेष्ठिनः कन्यकां शुभाम् ।
मनोरमाभिधां हर्षाद् गुरुणा परिणायितः ॥२५९॥
अमुना गृह्णता दीक्षां न्यस्तो निजपदे सुतः ।
सुदर्शनः सतां श्लाघ्यः सर्वदैव सुदर्शनः ॥२६०॥
झषध्वजाति रूपेण धिया च धिषणायते ।
चरित्रेण पवित्रेण गृहस्थोऽपि मुनीयते ॥ २६१ ॥
सत्यवाक्येन यस्यास्यं विवेकेन मनोऽम्बुजम् ।
रूपं लावण्यपूरेण युतं यस्य व्यराजत ॥२६२॥
सर्वज्ञशासने यस्य रागो नैव पुरन्ध्रिषु ।
यस्याऽभूद् व्यसनं शास्त्रे कामास्त्रे न मनागपि॥२६३॥
असौ द्वादशधा श्राद्धधर्मं सुगुरुसन्निधौ ।
प्रपद्य परमश्राद्धोऽजनिष्ट सुविशिष्टधीः ॥२६४॥

राजादीनां स मान्योऽभूत् किं पुनः पौरसंहतौ ।
यस्माद् मनोरमं शीलं यस्य गीश्च मनोरमा ॥ २६५ ॥
बभूव तस्य सन्मित्रं कपिलो नाम सन्मतिः ।
पुरोधा भूमिपालस्य षट्कर्मप्रगुणाशयः ॥२६६॥
कपिला नाम तत्पत्नी तारुण्यमदविह्वला ।
चतुःषष्टिकलापात्रं दक्षा पण्डितमानिनी ॥२६७॥
अन्येद्युर्वर्णिता प्रेम्णा कपिलेन तदग्रतः ।
सुदर्शनगुणग्रामोऽभिरामस्त्रिदशेष्वपि ॥२६८॥
ततो न सा रतिं प्राप विद्धवानङ्गमार्गणैः ।
ततः प्रभृति तत्रोत्काऽदिदृक्षत सुदर्शनम् ॥२६९॥
अन्येद्युः कपिलो राजकार्याद् ग्रामान्तरं गतः ।
प्रस्तावविज्ञा कपिला निजधात्रीमवोचत ॥२७०॥
श्रेष्ठिंस्तावकमित्रस्य जातं वपुरपाटवम् ।
देहवार्तामपि प्रष्टुं कस्माद् नागम्यते त्वया ? ॥२७१॥
इति शिक्षां मुहुर्दत्त्वा प्रेषिता निजधात्रिका ।
सा तद्गेहं समासाद्य तत्तथाऽवददुच्चकैः ॥२७२॥
तच्छ्रुत्वा वत्सलः श्रेष्ठी तत्रागत्येत्यवोचत ।
भ्रातृजाये ! मम भ्राता भद्रः कुत्रावतिष्ठते ? ॥२७३॥
तयोचे मन्दिरस्यान्तस्तव सुप्तोऽस्ति बान्धवः ।
भवानपि द्रुतं तत्र यातु यातु सदाशयः ॥ २७४ ॥
गृहस्यान्तः प्रविष्टो न दृष्टवान् सुहृदं निजम् ।
भ्रातृजाये ! कथं मां तु विप्लावयासि बालवत्॥२७५॥
हृन्नाभिस्तननेत्राणि कामास्त्राणीव बिभ्रती ।
प्रकटानि चलन्नेत्रा पुरस्तादस्य संस्थिता ॥२७६॥
यदैवाऽशृणवं नाथ ! तव रूपादिवर्णनम् ।
तदा प्रभृति मे कामतप्तं वपुरजायत ॥ २७७ ॥
संगमामृतरूपेण गात्रं निर्वापय प्रिय ! ।

यावत्कन्दर्पदहनाद् भस्मसाद् न भवाम्यहम् ॥२७८॥
विहस्योचे ततः श्रेष्ठी मुग्धे! मुग्धासि निश्चितम् ।
पुंवेषेण भ्रमाम्युच्चैरहमस्मि नपुंसकः ॥ २७९ ॥
एवं कूटप्रयोगेण विमोच्य स्वं शुभाशयः ।
निरगाच्छ्रेष्ठिपुन्नागो दध्याविति च मानसे ॥२८०॥
परगेहे न गन्तव्यं स्वस्मादपि प्रयोजनात् ।
परगेहप्रविष्टानां व्यलीकानि भवन्ति यत् ॥२८१॥
मानिनीमानलुण्टाकः स्मरसञ्जीवनौषधम् ।
लासकः पद्मिनीनां च वसन्तः समवातरत् ॥२८२॥
भृङ्गीणां विरुतैर्यत्र कोकिलानां तु कूजितैः ।
स्मरः सुप्तो व्यबोधिष्ट राजा वन्दिस्वरैरिव ॥२८३॥
प्रतिवृक्षं विलोक्यन्ते दोलाः शाखासु लम्बिताः ।
पान्थप्राणाण्डजग्राहे पाशा इव मनोभुवा ॥२८४॥
वसन्तश्रीसनाथानि काननानि निरीक्षितुम् ।
दधिवाहनभूपालश्चचाल सपरिच्छदः ॥२८५॥
सुदर्शनश्च रूपेण सुदर्शनधरायितः ।
गतः क्रीडितुमुद्याने नन्दनस्येव सोदरे ॥२८६॥
कापिलश्च द्विजः प्रान्तिकर्मज्ञैर्वेदवेदिभिः ।
अतिधीराक्षरोच्चारबधिरीकृतपुष्करैः ॥२८७॥
तदनु प्रस्थिता यातुं कपिला ब्राह्मणीवृता ।
तत्पुरश्चाभया देवी वरयानसमाश्रिता ॥२८८॥
मनोरमाऽपि सश्रीका सर्वालङ्कारशालिनी ।
साकं पुत्रैश्चतुर्भिश्च लक्ष्मीपतिभुजैरिव ॥२८९॥
दृष्ट्वा लीलायितं तस्या देवीनामपि दुर्लभम् ।
पप्रच्छ कपिला राज्ञीं कस्यैषा वरवर्णिनी? ॥२९०॥
पत्नी सुदर्शनस्येयं नामधेयाद् मनोरमा ।
एतयोर्नन्दना एते उपाया इव रूपिणः ॥२९१॥

एवं निगदिते देव्या सहासं साऽप्यवोचत ।
अहो ! वणिक्प्रियाणां हि कीदृशं किल कौशलम् ॥२९२॥

यतः—

अस्या नपुंसकं भर्ता परं जाताः सुताः कथम् ? ।
इत्यन्योन्यविरुद्धार्था वणिक्पत्नी पतिव्रता ॥ २९३ ॥
चेत्पद्मं संभवेद् व्योम्नि ग्रन्थौ चेद्बध्यतेऽनलः ।
तथाऽपि श्रेष्ठिनोऽमुष्माद् न भवन्ति सुताः खलु ॥२९४॥
अथाऽख्यदभया देवी मुग्धे ! ज्ञातमिदं कथम् ? ।
ततः सा पूर्ववृत्तान्तमवदच्च तदग्रतः ॥ २९५ ॥
सहास्यमभया प्राह कपिले ! मुग्धचेतने ! ।
अज्ञातकामशास्त्रार्थे ! वृथा पण्डितमानिनि ! ॥ २९६ ॥
असकौ परकीयासु रामासु भगिनीष्विव ।
सदा नपुंसकं श्रेष्ठी न पुनर्निजयोषिति ॥ २९७ ॥
तद् मुग्धे ! वञ्चिताऽसि त्वं छलात्तेन सुबुद्धिना ।
अथो कपिलयाऽऽख्यायि सख्यहं तावदीदृशी ॥ २९८ ॥
कामशास्त्रेषु नैपुण्यं भवतीषु विराजते ।
स्वामिन्या यादृशी ज्ञाता तादृश्येवाऽस्म्यहं पुनः ॥ २९९ ॥
ज्ञास्यामि तव दक्षत्वं कामार्थेषु विनिश्चितम् ।
यद्यमुं राजवद् देवि ! निर्व्रीडं क्रीडयिष्यति ॥ ३०० ॥
निशम्येदं बभाणैषा सख्यमुं रमये न हि ।
तदा तव सतीर्थ्याऽहं वृथा विज्ञातकौशला ॥ ३०१ ॥
इत्थं विज्ञाय सा देवी प्रतिज्ञां तां गरीयसीम् ।
गत्वोद्याने यथाकामं क्रीडित्वा सौधमागमत् ॥ ३०२ ॥
अस्त्यस्याः पण्डिता नाम धात्री विश्वासभाजनम् ।
तदग्रे विजने देवी कथयामास सादरम् ॥ ३०३ ॥
सुदर्शनेन सार्धं मे यथा भवति सङ्गमः ।
तथा कुरु वितत्योच्चैः किञ्चित्कैतवनाटकम् ॥ ३०४ ॥

उवाच धात्रिका पुत्रि ! धरित्रीधववल्लभे ! ।
न सुन्दरं त्वया प्रोक्तमिहाऽमुत्राऽप्रियङ्करम् ॥ ३०५ ॥
यस्मादेष महासत्त्वः परनारीसहोदरः ।
कामयिष्यति कस्मात् त्वां गृहस्थोऽपि महाव्रती ? ॥३०६॥
कथमत्र समानेयः पारीन्द्र इव काननात् ।
आनीतोऽपि तव स्वार्थं न कर्तेति विचिन्तय ॥ ३०७ ॥
अथोवाचाऽभया देवी प्रतिज्ञेयं कृता मया ।
साकं कपिलगेहिन्या सत्या कार्या यथा तथा ॥ ३०८ ॥
नान्यस्य पुरतो मातराख्यातुमपि पार्यते ।
अतिदुष्करकार्याणां भवत्येव विचक्षणा ॥ ३०९ ॥
निःश्वस्याऽथ क्षणं स्थित्वाऽवादीद्धात्री मया सुते ! ।
उपायो लब्ध ईदृक्षः, कीदृक्ष इति साऽगदत् ? ॥ ३१० ॥
श्रेष्ठ्येष पौषधं पूर्णं विधत्ते पर्ववासरे ।
चत्वरादिषु मौनेन कायोत्सर्गीव तिष्ठति ॥ ३११ ॥
तत्कृते तत्र गत्वा तं कायोत्सर्गपरायणम् ।
मूकीभावेन तिष्ठन्तं संवेष्ट्य वसनाञ्चलैः ॥ ३१२ ॥
कन्दर्पप्रतिमाव्याजाद् व्यामोह्य द्वाररक्षकान् ।
द्वित्रिर्वा नयनव्याजादानेष्यामि सुदर्शनम् ॥ ३१३ ॥
एवंकृते त्वया कार्या स्वप्रतिज्ञा यथोदिता ।
ढक्का देया ढाक्किकेन नात्र जेयं परं बलम् ॥ ३१४ ॥
एवं राज्ञी धात्रिकया गदिता मुदिताऽभवत् ।
प्रस्तावपण्डिता शश्वद्वीक्षमाणा चिरं स्थिता ॥ ३१५ ॥
अन्येद्युरष्टमीरात्रौ धात्र्या विज्ञातकार्यया ।
दृष्टः श्रेष्ठी महासत्त्वः पौषधागारमाश्रितः ॥ ३१६ ॥
पुष्पादिकसपर्याया नयनाऽऽनयनच्छलात् ।
कन्दर्पप्रतिबिम्बस्य व्याजादेष प्रवेशितः ॥ ३१७ ॥
अमुं वीक्ष्याऽभयादेवी हृष्टा प्राप्तनिधानवत् ।

क्षोभयितुं समारेभे कटाक्षविशिखैः शितैः ॥ ३१८ ॥
निजसंगसुधास्वादकलनां ललनाप्रिय ! ।
दयां विधाय संधेहि स्वर्गसौख्यमहाद्भुतम् ॥ ३१९ ॥
किमिति व्रतकष्टानि कुरुषे मूढमानस ! ? ।
या व्रतैरपि दुष्प्रापा सा प्राप्ताऽहं त्वयाऽधुना ॥ ३२० ॥
अनाथामिव मां हन्यमानां मदनमार्गणैः ।
कस्मादुपेक्षसे नाथ ! सदयोऽस्यऽबलाजने ॥ ३२१ ॥
त्वां स्मरन्त्या ममाभूवन् दिनाः कल्पशतोपमाः ।
निशा अपि गुणाधार ! ब्राह्मया मे दिवसा इव ॥३२२॥
निशास्वप्नेषु वार्तासु दिगन्तेषु दृशोः पुरः ।
त्वामेकरूपिणमपि वीक्षे रूपसहस्रगम् ॥ ३२३ ॥
निशम्येत्यथ साकारं प्रत्याख्यानं समाहितः ।
धर्मध्यानरतः श्रेष्ठी विशेषेण चकार सः ॥ ३२४ ॥
अभयाऽपि यथाबुद्धि भाषमाणा नवा गिरः ।
मुनीनामपि हि क्षोभकारिणी रूपसम्पदा ॥ ३२५ ॥
गायन्ती पञ्चमग्रामबन्धुरा नवगीतिकाम् ।
क्षोभयामास नैवामुं रजन्याऽपि समग्रया ॥ ३२६ ॥
अमुं स्वदारसन्तोषपवित्रमिव वीक्षितुम् ।
अजनिष्ट प्रभास्फोटस्तिमिरं संहरन् करैः ॥ ३२७ ॥
एतावत्यो मया वाचः सामभिः प्रतिपादिताः ।
तैः साध्यो यन्नवान्नैव सन्निपात इवोदकैः ॥ ३२८ ॥
इदानीं पाटितं देहं कृत्वाऽहं नखकोटिभिः ।
पूत्करिष्येतरां पाप ! नेदं भाव्यर्गला व्रतम् ॥ ३२९ ॥
तथाप्यक्षुभ्यति श्रेष्ठिपुङ्गवे नृपवल्लभा ।
अहो वज्रमयो ह्येष न विलीनो मदन्तिके ॥ ३३० ॥
चिन्तयित्वेति पूत्कर्तुं समारेभे महारवैः ।
सत्यं रक्ता विरक्ताश्च मारयन्ति स्त्रियः खलु ॥ ३३१ ॥

रे रक्षकाः ! बलादेष मां कामयितुमुद्यतः ।
दारयति नखैस्तीक्ष्णैः शीघ्रं धावत धावत ॥ ३३२ ॥
श्रुत्वेदं सत्वरं तत्र समागात्पृथिवीपतिः ।
अमुं विश्वासभवनमपश्यच्च स्वचित्तवत् ॥ ३३३ ॥
अपृच्छच्च प्रयत्नेन वृत्तान्तस्तव चैष कः ? ।
सोऽप्यस्थाद् मौनभाक् कामं विशेषेण समाहितः ॥३३४॥
नाऽदासीदुत्तरं किञ्चिदेष क्रुद्धः क्षितीश्वरः ।
शूलाप्रोतो विधातव्य एष इत्यादिशन्नरान् ॥ ३३५ ॥
रे ! पारदारिकेत्युग्रैः संदंशैरिव भाषितैः ।
तस्य श्रोत्रपुटीमन्तर्भेदयामासुराशु ते ॥ ३३६ ॥
न्यस्तोऽसौ रासभे पृष्ठे कण्ठन्यस्तशराववान् ।
निम्बपत्रैः कृतोष्णीषः कज्जलैर्लिप्तविग्रहः ॥ ३३७ ॥
गाढं विडम्बयित्वासौ भ्रामयित्वा महापुरे ।
नीतः पितृवने श्रेष्ठी स्मरन् पञ्चनमस्कृतिम् ॥ ३३८ ॥
इतश्च श्रेष्ठिनः पत्नी महासती मनोरमा ।
अशृणोद् दुःश्रवां वार्तां तदीयां वज्रपातवत् ॥ ३३९ ॥
सर्वज्ञशासनाभिज्ञः परदारपराङ्मुखः ।
पट्टदेवीं महीभर्तुः श्रेष्ठी प्रार्थयते कथम् ?॥ ३४० ॥
किञ्चित्संभाव्यते देव्याः कूटं कूटनिधिर्हि सा ।
असंपूर्णे निजार्थे हि किं न कुर्युर्मलीमसाः ? ॥ ३४१ ॥
अन्तःशून्या बहीरम्या नारी वारीव देहिनाम् ।
लौल्यादास्वाद्यमानोच्चैर्निर्मिमीत गलग्रहम् ॥ ३४२ ॥
लज्जाकोशविनिर्मुक्ता स्त्री शस्त्रीव भयङ्करा ।
किं न धत्ते महामोहहस्तन्यस्ता विवेकिनाम् ? ॥ ३४३ ॥
विचिन्त्येति कृतस्नाना वसाना श्वेतवाससी ।
पूजयित्वार्हतो बिम्बं निर्विलम्बं मनोरमा ॥ ३४४ ॥
यद्येष परदारेषु निर्विकारः सुदर्शनः ।

तदत्र कुरु सांनिध्यं मातः! शासनदेवते! ॥ ३४५ ॥
इति व्याकृत्य नासाग्रन्यस्तनेत्रा सदार्हती ।
कायोत्सर्गं विधत्ते स्म निश्चलाङ्गी शिला यथा ॥ ३४६ ॥
(त्रिभिर्विशेषकम्)
इतश्चार्हत्प्रवचनदेवी तस्याः प्रभावतः ।
अगाद् वध्यभुवं तत्र यत्राऽतिष्ठत् सुदर्शनः ॥ ३४७ ॥
इतः सुदर्शनः श्रेष्ठी शूलायां विनिवेशितः ।
शूला सिंहासनं जज्ञे देवतायाः प्रभावतः ॥ ३४८ ॥
ततश्च कृष्टाः कोशेभ्यो निस्त्रिंशा निस्त्रपैस्तदा ।
मुक्ताश्च श्रेष्ठिनः कण्ठपीठे नगररक्षकैः ॥ ३४९ ॥
देवतायाः प्रभावेण प्रहारास्ते समन्ततः ।
स्रग्माल्यरूपिणो जाता भ्रमद्भृङ्गमनोरमाः ॥ ३५० ॥
ततो रक्षानिबद्धोऽसौ कण्ठपीठे तलाधिपैः ।
हाररूपोऽभवत्सोऽपि चलत्तरलनायकः ॥ ३५१ ॥
उपरिष्टात् ततः पुर्या विचक्रे देवता शिलाम् ।
पुरीपिधानवद् कालचक्रवद्भ्रमवक्त्रवत् ॥ ३५२ ॥
तामालोक्य भयोद्भ्रान्तः सपौरोऽजनि भूपतिः ।
सर्वासामेव भीतीनां मरणं हि महाभयम् ॥ ३५३ ॥
सागसं पृथिवीपालं सपौरं सपरिच्छदम् ।
एषा हन्मि शिलापातादिति शृण्वन्तु मे वचः ॥ ३५४ ॥
स्मरन्तु देवतां पौरा युष्मच्छासनवारिणीम् ।
क्रुद्धाऽहं सर्वथा दोषरहितश्रेष्ठिनो वधात् ॥ ३५५ ॥
रे! रे! धरेश! नो वेत्सि स्वभार्याया विजृम्भितम् ।
यदस्य चिन्तितं मूढ! तत्ते पततु मस्तके ॥ ३५६ ॥
इति दैवं वचः श्रुत्वा वज्रपातसहोदरम् ।
मृत्युभीतो नृपः प्राह स्वामिन्यागः सहस्व मे ॥ ३५७ ॥
अविमृश्य विधाताऽस्मि क्षन्तव्यो दुर्नयो मम ।

विनम्रे सव्यलीकेऽपि महात्मानः कृपापराः ॥ ३५८ ॥
द्विपेन्द्रे चेदमुं मूढ! स्वयं धातासि सन्मतिम् ।
मौलौ दधासि चेच्छत्रं छत्रधारकवत्स्वयम् ॥ ३५९ ॥
तदा ते जीवितं राज्यं कृतरक्षं भविष्यति ।
अन्यथा ते शिलापातान्निपातो भविता द्रुतम् ॥ ३६० ॥
श्रुत्वेदं भीतभीतोऽसौ सपौरः पादचारतः ।
वध्यभूमीमनुप्राप्तो गृहीतप्राभृतोत्करः ॥ ३६१ ॥
श्रेष्ठिन्निरपराधोऽपि खेदितो यद्विमानतः ।
तत् क्षमस्व भवाशेषजीवानां जीवितप्रदः ॥ ३६२ ॥
तत्प्रभावादिहाऽऽयान्ति देवता अपि पत्तिवत् ।
अस्मादृशाः कियन्मात्रा निर्विकारमतल्लिके!? ॥ ३६३ ॥
कुम्भिपृष्ठे समारोप्य श्रेष्ठिनं श्रेष्ठितायुतम् ।
बभार स स्वयं मूर्ध्नि विमलातपवारणम् ॥ ३६४ ॥
पौरैः प्रमुदितः साकं गायमानावदानभृत् ।
वन्दिभिः स्तूयमानस्तु वर्ण्यमानः कवीश्वरैः ॥ ३६५ ॥
उद्घोष्यमाणमङ्गल्यो वृद्धस्त्रीभिः पदे पदे ।
स्वगेहेऽगाद् वणिग्नेता भवरागविरागवान् ॥ ३६६ ॥
( युग्मम् )

भूमीपतिर्निवृत्य स्वमावासमगमत् ततः ।
मनोरमामनुज्ञाप्य देवताऽपि तिरोदधे ॥ ३६७ ॥
क्षणाद् वन्धः क्षणात् पूजा क्षणाद् दुःखं क्षणात् सुखम् ।
क्षणिकेऽस्मिन् भवे सर्वं दृश्यते क्षणिकं किल ॥ ३६८ ॥
स्वातिप्रांता यथा मेघा द्विरदान्ता यथा श्रियः ।
तथा राजप्रसादाश्च विपदन्ता असंशयम् ॥ ३६९ ॥
यकाभ्यामेव कर्णाभ्यां श्रुतं स्वगुणवर्णनम् ।
रे! पारदारिक! इति ताभ्यामेव हि शुश्रुवे ॥ ३७० ॥
यैरेव विनयोत्कर्षात् पादा मे वन्दिताश्चिरम् ।

तैरेव ताडितः शातैः कृपाणैः निष्कृपाऽऽशयैः ॥ ३७१ ॥
इत्थं निध्यायतस्तस्य समागात्पावनाकृतिः ।
सूरिः कोऽपि श्रुताम्भोधिसमुल्लासनचन्द्रमाः ॥ ३७२ ॥
राज्ञा स पौरलोकैश्च वार्यमाणोऽपि सन्मतिः ।
संवेगादाददे दीक्षामन्तिके तस्य भावतः ॥ ३७३ ॥
अभयाऽपि प्रभावं तं प्रभावन्तं निरीक्ष्य तम् ।
उद्बध्यात्मानमकरोज्जीवितत्यागमञ्जसा ॥ ३७४ ॥
अथ पाटलिपुत्रस्य श्मशाने व्यन्तरामरी ।
अभूदुद्बन्धनाद्यैर्हि व्यन्तरत्वं प्रजायते ॥ ३७५ ॥
यतः—
उद्बन्धनाद् विषग्रासाद् रज्जुबन्धाद् हुताशनात् ।
सलिलस्य प्रवेशाच्च व्यन्तरत्वं प्रकीर्तितम् ॥ ३७६ ॥
चेद् विशुद्धं भवेच्चेतो निधने कर्मलाघवात् ।
महादुःखनिधानेषु परथा नरकादिषु ॥ ३७७ ॥
( युग्मम् )
नरनाथभयोद्भ्रान्ता तथा धात्र्यपि पण्डिता ।
चम्पापुर्या विनिःसृत्य पाटलीपुत्रमास्थिता ॥ ३७८ ॥
देवदत्ताभिधानाया वेश्याया गृहमागता ।
रूपं सुदर्शनस्योच्चैः सदा व्याख्यातवत्यऽसौ ॥ ३७९ ॥
तद्गुणश्रवणादेषा जातरागा दिने दिने ।
कृष्णपक्षेन्दुलेखेव भजते स्म परिक्षयम् ॥ ३८० ॥
ततः सोऽपि महासत्त्वो गीतार्थः श्रुतपारगः ।
एकाकी प्रतिमां धीमान् भेजे गुरुनिदेशतः ॥ ३८१ ॥
विहरन्मेदिनीपीठे तपःशोषितविग्रहः ।
समस्तलब्धिसंपूर्णः समागात् पाटलीपथे ॥ ३८२ ॥
सिद्धान्तोक्तविधानेन भिक्षायै पर्यटन्नसौ ।
निरैक्ष्यत तया धात्र्या देवदत्ताऽसमेतया ॥ ३८३ ॥

ऊचे सा भगवानेष साधुः सुदर्शनाभिधः ।
यद्वार्त्ताभिः क्षणमिव दिनं निर्गम्यते मया ॥ ३८४ ॥
यद्येष तपसा क्षीणस्तथाऽप्यऽद्भुतरूपभाक् ।
भग्नोऽपि कलशो हैमो न तुल्यः कलशैः परैः ॥ ३८५ ॥
तदादेशात् ततः काचिद् गत्वा चेटी तदन्तिके ।
गर्भश्राद्ध्युपमानेन ववन्दे चरणौ मुनेः ॥ ३८६ ॥
उपोषिता मुनेऽस्माकं स्वामिनी श्वस्तनेऽहनि ।
इदानीं पारणां कर्त्ता तदायातु भवांस्ततः ॥ ३८७ ॥
ऋजुचेता महासत्त्वस्तया दर्शितवर्त्मना ।
भ्राम्यन् वेश्यागृहं प्रापदपरिज्ञातचर्यया ॥ ३८८ ॥
यथा यथा मुनिर्गेहमविशन्मुनिचर्यया ।
तथा तथार्गलां चेटी ददाति स्म दुराशया ॥ ३८९ ॥
चलैर्नेत्राञ्चलैः साधोश्चारित्रं कज्जलध्वजम् ।
विध्यापयितुमारेभे सा रम्भेव मनोहरा ॥ ३९० ॥
यद्यपि व्रतवानस्मि तथापि मम विग्रहः ।
विग्रहो मूर्तिमान् जज्ञे धिग् मे सुन्दरमूर्त्तिताम् ॥ ३९१ ॥
ध्यात्वेति मौनमाधाय कायोत्सर्गं ददौ मुनिः ।
कायोत्सर्गाद् विलीयन्ते उपसर्गपरम्पराः ॥ ३९२ ॥
सकलं वासरं साधुः खेदितः कामजल्पनैः ।
तथापि ध्यानतोऽचालीत्कचिन्नैवाऽश्मपुत्रवत् ॥ ३९३ ॥
देवदत्तानिदेशेन रात्रौ साधुसुदर्शनः ।
परित्यक्तः पितृवने क्रीडत्कौशिकभीषणे ॥ ३९४ ॥
अथासौ व्यन्तरी तत्र क्रीडन्ती वीक्ष्य तं मुनिम् ।
पूर्ववैरं स्मृतिं प्रापावधिज्ञानप्रयोगतः ॥ ३९५ ॥
विचक्रे शीतलं वातं तुषारकणवर्षिणम् ।
येनास्माभिर्विदीर्येत किं पुनस्तादृशां तनूः ? ॥ ३९६ ॥
ततः शकुनिकारूपं विकृत्य व्यन्तरामरी ।

भृत्वा पक्षौ च नीरेण स्थित्वा तस्योपरि क्रुधा ॥३९७॥
मोचयन्ती जलान्युच्चैः पक्षगाणि शनैः शनैः ।
विदधे पक्षपातं सा तालवृन्ताऽनिलायितम् ॥३९८॥
( युग्मम् )
तपःक्षामो विवसनः कथं शीतं सहेद् मुनिः ? ।
तद्गात्रं कम्पितव्याजाच्छीतं दूरेऽकरोदिव ॥३९९॥
रे ! रे ! जीव ! कियन्मात्रं तव कष्टमुपास्थितम् ? ।
यत्सोढं नरके तस्य वर्णिकामात्रमीक्ष्यताम् ॥४००॥
पायितं त्रपु संतप्तं कुम्भीपाकेषु पाचितः ।
तारितः पूयसंपूर्णां वैतरिणीं तरङ्गिणीम् ॥४०१॥
संछिन्नः कुन्तचक्राद्यैः परमाधार्मिकैः सुरैः ।
तत्कष्टं जीव ! हृदये दधतः किमिदं तव ? ॥४०२॥
तवोपकृतिकारिण्याः कर्षयन्त्यास्तनूमिमाम् ।
एतस्या नालमीशोऽसि कर्तुं प्रत्युपकारिताम् ॥४०३॥
एवं भावयतस्तस्य सहमानस्य तां व्यथाम् ।
सूर्योदये वरज्ञानमुत्पेदे विश्वदीपकम् ॥४०४॥
अथ भक्त्या समाकृष्टा आगतास्त्रिदशास्तदा ।
केवलज्ञानमहिमां चक्रिरे सुमहैः सह ॥४०५॥
ततो देवकृते पद्मासने मुनिमतङ्गजः ।
उपाविक्षदथाऽऽनन्तुमापतन् पुरवासिनः ॥४०६॥
ततो देशनया तस्य प्रबुद्धा व्यन्तरामरी ।
अन्येऽपि बहवो लोका भेजिरे धर्ममार्हतम् ॥४०७॥
अथो विहृत्य सुचिरं केवली प्रतिबोधकृत् ।
निर्वाणसंपदं भेजे सर्वक्लेशप्रणाशकम् ॥४०८॥
राजन् ! यथाऽमुना चक्रे गृहस्थत्वेऽपि सद्धिया ।
व्रतं स्वदारसंतोषं तथा कार्यं नरैरपि ॥४०९॥
अथ प्रणम्य तीर्थेशं श्रीकुम्भोऽभिदधे नृपः ।

धन्यः सुदर्शनः श्रेष्ठी जिनदर्शनविश्रुतः ॥४१०॥
तावत्सर्वो जनो धीमांस्तावत्सर्वोऽपि पण्डितः ।
तावच्छुचिः कृतज्ञश्च यावद् न स्त्रीकटाक्षितः ॥४११॥
विकारैर्मान्मथैः काम्यैर्यद्घनैरिव ताडितम् ।
न भिन्नं रत्नवज्जात्यं शीलं तद् निर्वृतेः पदम् ॥४१२॥
अथ प्राकाशयद्विश्वनाथः पाथोदनिस्वनः ।
परिग्रहमितिर्नामाणुव्रतं पञ्चमं व्रतम् ॥४१३॥
पोतो यथाऽतिसंपूर्णो मज्जत्येव महोदधौ ।
तथा परिमितिभ्रष्टः संसारे दुस्तरे नरः ॥४१४॥
धनधान्यक्षेत्रवस्तुरजतस्य चतुष्पदाम् ।
सुवर्णकुप्यद्विपदां प्रमाणं पञ्चमं व्रतम् ॥४१५॥
सचित्ताचित्तयोर्येन यावती विरतिः कृता ।
तावती तेन पाल्यैव नोल्लङ्घ्या मूलमार्गवत् ॥४१६॥
परिग्रहमितिं चक्रुर्ये ज्ञातजिनशासनाः ।
ते स्युर्भोगपदं शश्वद् भोगदत्तसुदत्तवत् ॥ ४१७ ॥
समस्ति भारतेऽमुत्र पुरं रत्नाकराभिधम् ।
यद् वेष्टितमिवाम्भोधिवलयैः परिखामिषात् ॥४१८॥
सत्प्रभस्तत्र भूपालः समतापः परन्तपः ।
तद्गुणैर्ग्रथिता कीर्तिपटी छादयते दिशः ॥४१९॥
तस्मिन्नेवास्ति वास्तव्यो भोगदत्ताभिधः सुधीः ।
इभ्यपुत्रः परं दैवाद् दारिद्र्यस्य निकेतनम् ॥४२०॥
लक्ष्मीः खलु सखी कीर्तेर्लक्ष्मीः कल्याणपारदः ।
लक्ष्मीर्विपल्लतादात्रं लक्ष्मी रक्षणमङ्गलम् ॥४२१॥
जातिः कुलं विवेकोऽपि सर्वे रूपादयो गुणाः ।
एकयैव श्रिया हीनास्तृणायन्ते शरीरिणाम् ॥४२२॥
धनुर्दण्डः सुवंशोऽपि सगुणः पर्ववानपि ।
सततं लक्षलाभाय यतते कोटिमानपि ॥४२३॥

लक्ष्म्या मुक्तस्य पाथोधेरपेयं जलमप्यभूत् ।
शाकीफलानि स्वादूनि भवन्ति श्रीमतो गृहे ॥४२४॥
गोपमुख्योऽपि कृष्णोऽपि हलिनो बन्धुरप्यहो ! ।
लक्ष्म्या कक्षीकृतः शश्वद् भण्यते पुरुषोत्तमः ॥४२५॥
एवं विचिन्त्य नगराद् निर्ययौ देवतासखः ।
अरण्ये योगिनं कंचिद् वीक्षामास च विस्मितः ॥४२६॥
वितन्वता तदादेशं तन्वता शिष्यतां भृशम् ।
अरञ्जि तेन योगीन्द्रो विनयात्किं न सिध्यति ? ॥४२७॥
हंहो ! नर ! कथं शश्वत्सेवसे मां कृतादरः ? ।
तद् ब्रूहि चिन्तितं चित्ते पूरये ते समीहितम् ॥४२८॥
योगीन्द्र ! द्रविणार्थ्यस्मि तदुपायं निवेदय ।
वित्तजातविहीनोऽपि नरो गौरिव गण्यते ॥ ४२९ ॥
वत्साऽत्र कूपिका कान्ता कोटीवेधरसाकुला ।
अस्यां प्रविश्य वेगेन तमाकृष निमेषतः ॥ ४३० ॥
यथा ते जायते स्वर्णसिद्धिश्चिन्तितपूरदा ।
अचिन्त्यो हि रसादीनां महिमा कल्पवृक्षवत् ॥४३१॥
ततश्च लघुखट्वायां निवेश्याऽमुं सतुम्बकम् ।
गुणैः प्रसृमरैः क्षिप्तः कूपिकायां खनाविव ॥४३२॥
उपत्यकास्थितेनाऽथ कण्ठपीठागतासुना ।
कूपिकार्धं गतो यावत् तावद् दृष्टः स केनचित् ॥४३३॥
हंहो ! नर ! रसं कस्मादाक्रष्टुं त्वं समुद्यतः ? ।
तदवश्यं मृतिस्तेऽत्र न क्षेमो यमसंनिधौ ॥ ४३४ ॥
इत्याकर्ण्य वचस्तस्य भेरीभाङ्कारभासुरम् ।
ऊचे कस्त्वं कुतोऽप्यत्र संस्थितस्तन्निवेदय ? ॥४३५॥
भ्रातरास्मि धनग्रामवासी व्यवहृतिप्रियः ।
सुदत्तनामतो दत्तद्रव्यः कौटुम्बिकव्रजे ॥ ४३६ ॥
स ग्रामश्चौरधाटीभिर्भग्नः प्रज्वालितो भृशम् ।

ततोऽहं काननेऽमुष्मिन् भ्राम्यन् योगीन्द्रमैक्षिषि॥४३७॥
सेवितश्च मया पाणिपादसंवाहनादिभिः।
रञ्जितश्च धनोपायमित्यभाषिष्ट दुष्टधीः ॥ ४३८ ॥
अमुष्या रसमाकृष्य कृत्वा हेमशतान्यहो !।
रसेन देह्यनेनैव दारिद्र्यस्य जलाञ्जलिम् ॥ ४३९ ॥
ततोऽहं त्वामिवात्रैव क्षिप्तस्तेन दुरात्मना।
मयाऽलाबु भृतं भद्र ! रसेनाऽऽनन्ददायिना ॥४४०॥
कूपिकाकण्ठमानीतस्तेनाकृष्टो गुणोद्धृतेः।
याचितं तुम्बकं भद्र ! मुग्धबुद्ध्या मयार्पितम् ॥४४१॥
छित्त्वा छित्त्वा गुणं तेन पातितो दुष्टबुद्धिना।
पतताऽत्र मया लब्धाऽधित्यका सुखवृत्तिका ॥४४२॥
अस्यां निवसतो भद्र ! दिनाष्टकमजायत।
इतश्चागाद् भवानत्र मद्भोत्रज इवाऽपरः ॥४४३॥
द्यूतं वेश्यानुरागश्च धातुवादश्च विभ्रमः।
योगिसेवा सदा रुष्टे दैवेऽमी स्युः शरीरिणाम् ॥४४४॥
बहवो द्रविणोपायाः पाशुपाल्यादिकाः क्षितौ।
योगिसेवा कथं चक्रे मतिः कर्मानुसारिणी ? ॥४४५॥
एकराशिगतत्वेन योगिनश्च यमस्य च।
बिभेमि स्वप्नमध्येऽपि किं पुना रूपदर्शनात् ॥४४६॥
श्रुत्वेति भोगदत्तोऽथ स्थितो भीतस्तदन्तिके।
मूकीभूत इवोड्डीनप्राणः प्राणभयं महत् ॥४४७॥
इतश्च योगिनाऽप्यूचे वत्साऽलाबु रसेन मे।
संपूर्णीकुरु वेगेन विघ्ननिघ्नः शुभक्षणः ॥ ४४८ ॥
नाऽवदद् भोगदत्तोऽथ भाषितोऽपि मुहुर्मुहुः।
शुकवत्पञ्जरान्तस्थो मार्जारस्य निरीक्षणात् ॥४४९॥
क्षपां छित्त्वा विचेतस्को योग्यभूद् योग्यकर्मणि।
एतौ तु निर्गमोपायं ध्यायन्तौ गर्भगाविव ॥४५०॥

ऊर्ध्वस्थभोगदत्तेन प्रलम्बीकृतबाहुना।
द्वितीयाधित्यका दृष्टा प्रत्याशाबीजभूमिका ॥४५१॥
ततो द्वावपि तौ तत्र वरत्रालम्बिताविव।
द्वितीयोत्पत्यकाप्राप्तौ निर्यातौ च बहिस्ततः॥४५२॥
इतश्च चलितौ तस्मात् प्रेतेशसदनादिव।
प्राप्तः शोणेक्षणो योगी मदिरामदमत्तवत् ॥४५३॥
ततश्च दण्डमादाय ढुढौके योगवित् तयोः।
तावपि प्रसृतप्राणौ चलतः स्म महाभुजौ ॥४५४॥
भल्लाभल्लि मुष्टामुष्टि दण्डादण्डि भुजाभुजि।
अभूत्तेषां महायुद्धं प्रेक्षणीयमिवान्तकम् ॥ ४५५॥
बद्धस्ताभ्यां दृढं योगी कन्दलीजालरज्जुभिः।
यत्क्रियेताऽस्य तद् न्यूनं, शठे हि शठता मता॥४५६॥
रे! रे! वत्सौ! कथंकारं हथो मां गलसंग्रहात्?।
युवयोर्द्रविणं दास्ये वाञ्छाविच्छेदकोविदम् ॥४५७॥
अस्या रसं समाकृष्य कोटीवेधं प्रयच्छ नौ।
तदा ते जीवितं भावि नान्यथा स्मर्यतां प्रभुः ॥४५८॥
ओमित्युक्तेऽथ तेनोच्चैः क्षिप्तोऽसौ कूपिकाजले।
तेनैव च प्रयोगेण सोऽभूत् संभृततुम्बकः ॥४५९॥
न पूर्वमर्पयिष्यामि भवतस्तुम्बकं करे।
पश्चान्मदीयमाचारं भवन्तौ कुरुतो यतः॥ ४६० ॥
यथा ते योगवित्! प्राणा वल्लभा आवयोस्तथा।
अयं न्यायः कथं क्षेपे विस्मृतो भवता भृशम्?॥४६१॥
ततस्ताभ्यां स योगीन्द्र आकृष्टस्तुम्बपात्रयुक्।
एतेन रसकर्माणि कथितानि तयोः पुरः॥ ४६२ ॥
अथोभौ वलितौ तस्मात् तूर्णं पूर्णमनोरथौ।
बिभ्रतौ सुचिरं चित्ते योगिनः कूटनाटकम् ॥४६३॥
मार्गे भिल्लैः सहालोच्य गृहीता यत्रमुं कथम्?।

तदा प्रसारितदृशोर्हृतं वातेन कज्जलम् ॥ ४६४ ॥
ध्यात्वेति धरिणीपीठे निक्षिप्यालाबु संभृतम् ।
चेलतुः सत्वरं भीतौ वीक्षमाणौ दिगन्तरान् ॥४६५॥
इतश्च नाहलैर्बद्ध्वा गृहीत्वाऽलाबु चापरम् ।
कथञ्चिद् विमुमुचाते स्मृताभीप्सितदैवतौ ॥४६६॥
यद्ययं रसः संप्राप्तस्तथापि विधिवल्गितात् ।
प्रनष्टः किमभाग्यानां करस्थमपि याति न ? ॥४६७॥
उपाया वहवोऽस्माभिर्विहिता दुष्करा अपि ।
परं भाग्येतरं याति दूरतः पुरतः स्थितम् ॥४६८॥
ध्यात्वेति पर्यटन्तौ च धावित्वा नाहलैः पुनः ।
धृत्वा धृत्वा पद्रदेव्या निक्षिप्तौ गर्भवेश्मनि ॥४६९॥
ऊचतुर्यामिकानावां कथंकारं धृतौ ननु ? ।
गृहीतरससर्वस्वौ गृहीतौषधसंचयौ ॥ ४७० ॥
ऊचिरे यामिका भद्रौ ! योगिना नाहलेशितुः ।
दत्त्वा हेम्नः सहस्रं च धारितौ मारणेच्छया ॥४७१॥
कपाटच्छन्नगर्भौकोवासिनौ गतमानसौ ।
श्रावं श्रावं गिरो जातौ किंकर्तव्यपरायणौ ॥४७२॥
भोगदत्तेन पाणिभ्यामादायाश्मानमुद्भटम् ।
अभि भट्टारिकां भङ्क्तुं डुढौके निर्भयत्वतः ॥४७३॥
रे चौरग्रामवास्तव्ये ! पद्ररक्षाभिधायिनि ! ।
नेयं भवसि निग्राह्ये ! ततः प्रोवाच देवता ॥ ४७४ ॥
निरागसं कथं भङ्क्तुमुद्यतोऽसि महामते ? ।
सोप्यूचेऽत्र समाचारो यद्वधो हि निरागसाम् ॥४७५॥
आवाभ्यां हन्त ! पान्थाभ्यां किमागो विहितं क्वचित् ? ।
येन क्षिप्तौ तवागारद्वारि विन्यस्तयामिके ! ॥४७६॥
यद् यूयं भणिताऽशेषं तत्कुर्वे पितृमातृवत् ।
सत्त्वेन विहिता अर्थाः संपद्यन्ते क्षणादपि ॥ ४७७ ॥

पद्मदेवि ! परं तुम्बं भूमीमध्यनिवेशितम् ।
आनीयार्पय नौ मुञ्च पल्लिदेशस्य दूरतः ॥ ४७८ ॥
तत्तया विहिते देव्या चलितौ मगधानभि ।
प्रापतुः कुशस्थलाख्यं पुरं प्रवरमंदिरम् ॥ ४७९ ॥
तत्र सूत्रभृतः कुट्यां स्थित्वा मुक्त्वा च तुम्बकम् ।
रक्षाकृते निवेश्याऽमुं भोगदत्ता वहिर्ययौ ॥ ४८० ॥
सुदत्तेऽप्यथ निद्राणे गलितालाबुकच्छटा ।
तया सूत्रभृतो वंशी संतप्ता हेममय्यभूत् ॥ ७८१ ॥
तं वीक्ष्य सूत्रभृत्तुष्टो गृहीत्वा तुम्बकं करे ।
विमुच्याऽनलतोऽधाक्षीत्कुटीं पूत्कारपूर्वकम् ॥४८२॥
निद्रायमाणं धृत्वाऽथ सुदत्तं करकैरवे ।
वहिश्चिक्षेप वेगेन तन्वन् मायादयोदयम् ॥ ४८३ ॥
आखुनाऽलाबुकगुणश्चिच्छेदे जीर्णगेहगः ।
रसश्च पतितो भूमौ निष्फलत्वमजायत ॥ ४८४ ॥

यतः—

येऽर्थाः विश्वस्तघातेन येऽर्थो मित्रवधादपि ।
न तेऽर्थाः सुचिरं सन्ति वह्न्यालीढा गृहा इव ॥४८५॥
इतश्चेतो भोगदत्तो दग्धां सूत्रभृतः कुटीम् ।
दृष्ट्वा पप्रच्छ सुहृदं तुम्बकं तव संनिधौ ? ॥ ४८६ ॥
मित्रौकः संस्थितं तुम्बं भस्मराशिरजायत ।
अद्यापि भाग्यलेशोऽपि नावयोः क्रियतां कथम् ? ४८७
अथो तौ निर्गतौ तस्मात् प्राप्य वैभारपर्वतम् ।
स्मृतेष्टदेवतौ यावद् झम्पां दातुं समुद्यतौ ॥ ४८८ ॥
तावन्महीभृतः शृङ्गे कायोत्सर्गस्थितो मुनिः ।
उभाभ्यां समतां तन्वन् ददृशेऽसौ दृशोः पुरः॥ ४८९॥
ततो मृत्युमतिं काञ्चिच्छिथिलीकृत्य तावुभौ ।
आगत्य प्रणिपत्यर्षिं ववन्दाते ॥ ४९० ॥

मुनिर्ध्यानं विमुच्याथ दत्त्वा धर्माशिषं तयोः ।
अभाषिष्टेति लोभान्धौ विहतौ स्थश्चिरं क्षितौ ॥४९१॥
योगिनस्तुम्बके प्राप्य पद्मदेव्याः प्रभावतः ।
लब्धायुष्कौ पुनर्ध्यातमरणावत्र पर्वते ॥ ४९२ ॥
लोभक्षोभमहाम्भोधेर्भ्रमकल्लोलमालिनः ।
इदं फेनायितं भद्रौ! जानीतां धीविमर्शनात् ॥४९३॥
जनाः पीतमहामोहकनकाः कनकाशया ।
लभन्ते प्राकृताः प्रायः स्वर्णं प्राकृतभाषया ॥४९४॥
तृष्णा खानिरगाधेयं दुष्पूरा केन पूर्यते? ।
या महद्भिरपि क्षिप्तैर्भूयो भूयो विवर्धते ॥ ४९५ ॥
च्युता दन्ताः सिताः केशा वाग्विरोधः पदे पदे ।
पातसज्जममुं देहं तृष्णा साध्वी न शाम्यति ॥ ४९६ ॥
प्रभूतैरपि संप्राप्तैरर्थैस्तृष्णा न शाम्यति ।
हविषा कृष्णवर्त्मेव भूयो भूयः प्रवर्धते ॥ ४९७ ॥
पादसंवाहनादीनि वेश्यानामपि कुर्वते ।
अवन्द्यमपि वन्दन्ते उच्छिष्टमपि भुञ्जते ॥ ४९८ ॥
अकृत्यमपि कुर्वन्ति कृत्यमपि त्यजन्त्यलम् ।
लोभाभिभूता मनुजाः किं किं नाम न कुर्वते? ॥४९९॥
परिग्रहस्य प्रमितिं कुर्वतां लोभशान्तये ।
सेतुबन्धमिवाऽपारमहामोहमहोदधेः ॥ ५०० ॥
अथ तौ द्वादशश्राद्धव्रतान्यप्यविशेषतः ।
त्रिंशत्कनकसहस्राश्चक्रतुः प्रमितिव्रते ॥ ५०१ ॥
इतो भ्रातृसुतः साधोर्विद्युन्मालीति खेचरः ।
नभसा विद्यया प्राप वन्दितुं तं महामुनिम् ॥ ५०२ ॥
नत्वा मुनिमिमौ दृष्ट्वा पृच्छति स्म नभश्चरः ।
काविमौ भद्रकाकारौ त्वन्मुखेक्षणतत्परौ? ॥ ५०३ ॥

सुधीरिदानीमापन्नद्वादशश्रावकव्रतौ ।
भोगदत्तसुदत्ताख्यौ भद्रकौ भद्रकोविदौ ॥ ५०४ ॥
मुने! युक्तं ततः कर्तुं साधु साधर्मिकार्हणम् ।
विद्यया वित्तदानैर्वा यतो राद्धान्तगीरिति ॥ ५०५ ॥
अन्योन्यदेशजन्मानस्त्वन्यान्याहारवर्द्धिताः ।
जिनशासनसंपन्नाः सर्वे ते बान्धवा मताः ॥५०६॥
ततः कुष्ठरुजाहन्तृ वलयं सन्महौषधेः ।
अर्पयामास ताभ्यां स सत्ये मुह्यन्ति नोत्तमाः ॥५०७॥
धन्यौ स्तः कृतपुण्यौ स्तः सुलब्धजन्मजीवितौ ।
यदयं तीर्थकृद्धर्मः संप्राप्तो दिव्यरत्नवत् ॥ ५०८ ॥
तौ प्रशस्य मुनिं नत्वा विद्युन्माली तिरोदधे ।
तावप्येनं नमस्कृत्येयतुः पुरं कुशस्थलम् ॥ ५०९ ॥
तत्रत्यभूमिनाथस्य नरदेवस्य संज्ञिनः ।
पुत्रः परन्तपो नाम गलकुष्ठरुजान्वितः ॥ ५१० ॥
यः कश्चिदेनमुल्लाघं विदधाति कथंचन ।
स स्वर्णलक्षं गृह्णातु घोषयामासिवानिति ॥ ५११ ॥
इमामाघोषणां श्रुत्वा डिण्डिमध्वानपूर्व्वकम् ।
धारयामासतुर्वाद्यमानं पटहमुद्भटम् ॥ ५१२ ॥
गत्वोपभूपमालोक्य कुमारं वेदनातुरम् ।
विनष्टनासिकं कुष्टरोगस्यातिभरादिव ॥ ५१३ ॥
(त्रिभिर्विशेषकम्)
सप्ताहात् कामसंकाशः कुमारो रूपसंपदा ।
क्रियते स्म ततस्ताभ्यां वैद्याभ्यामिव नाकिनः ॥५१४॥
अथ भूमीपतिस्तुष्टोऽवादीद् विकसिताननः ।
इदं राज्यमियं लक्ष्मीर्युवयोरिति गृह्यताम् ॥ ५१५ ॥
हेम्नस्त्रिंशत्सहस्रेभ्यः परं भूमिपते! हि नौ ।

१ सिद्धान्त-इत्यपि ।

मुक्त्वाऽस्ति नियमः साधुपादान्ते विहितो भृशम् ॥५१६
तच्छ्रुत्वा विस्मितो राजा प्राह धन्याविमौ नरौ ।
ययोर्नियम ईदृक्षो लोभान्धैः कुम्भसंभव ॥५१७॥
तावन्मात्रं वरं स्वर्णं गृहीत्वोभौ पुरस्थितौ ।
पालयामासतुः श्राद्धधर्मं शुद्धं यथाविधि ॥ ५१८ ॥
अस्माकं मागधे देशे विहारं कुर्वतां सताम् ।
गृहीतारौ मुनीन्द्रत्वं यातारौ च परं पदम् ॥५१९॥
इत्याकर्ण्याऽर्हतो वाक्यमभाषिष्ट क्षमापतिः
तौ धन्यौ यौ प्रभोः पार्श्वे गृहीतारौ महाव्रतम्॥५२०॥
एकं महाव्रतं तीर्थनाथादधिगतं परम् ।
कामधेनुपयःसिक्तकल्पद्रोः साम्यमञ्चति ॥ ५२१ ॥
स्वामिन् ! पञ्चाणुव्रतानि श्रुतान्येकाग्रचेतसा ।
गुणव्रतत्रयीं श्रोतुमुत्कस्तिष्ठामि साम्प्रतम् ॥ ५२२ ॥
तत्राद्यं दिग्व्रतं भोगोपभोगाख्यं द्वितीयकम् ।
ततश्चानर्थदण्डाख्यं शृणु कुम्भमहीपते ! ॥ ५२३ ॥
कर्मणा गन्धिकेनेव सूक्ष्मीकृत्य प्रवेशितैः ।
इदं व्याप्तं जगज्जीवैर्वासैरिव समुद्गकः ॥ ५२४ ॥
स्थावरजङ्गमभेदा बादरा अपि जन्तवः ।
सन्ति तिर्यगधश्चोर्ध्वं तेषां व्यापत्तिभीरुणा ॥ ५२५ ॥
आदाय दिग्व्रतं सम्यक् पालनीयं प्रयत्नतः ।
अयतोऽयं यतः प्राणी तप्ताऽयोगोलसंनिभः ॥५२६॥
नियन्त्रिते हि देहे स्वे गमनं प्रति देहिना ।
अभयं सर्वसत्त्वेभ्यो दत्तं पुण्यफलप्रदम् ॥ ५२७ ॥
दिग्व्रतग्रहणात् प्राणी प्रेत्याऽमुत्र श्रियः पदम् ।
संपद्यतेतरां मित्रानन्द ऐरवते यथा ॥ ५२८ ॥
तथाहि पुष्करद्वीपे क्षेत्रे ऐरावताभिधे ।
पुरं भोगपुरं तत्र मित्रानन्दक्षितीश्वरः ॥ ५२९ ॥

शृङ्गाररसवापीभिर्वनिताभिर्दिवानिशम् ।
साकं चिक्रीड राज्यस्य चिन्ता नैव चकार सः ५३०॥
कदाचिच्चषकैर्हैमैरञ्चितैः स्मेरपङ्कजैः ।
रामाभिः सह मैरेयं पिबति स्म सविस्मयम् ॥५३१॥
कदाचिदुद्यानगतः पुष्पावचयमुच्चकैः ।
योषिद्भिः सह कुर्वाणो वसन्ते खेलति स्म सः ॥ ५३२ ॥
वर्षासु कृतहर्षासु सौधोत्सङ्गे नराधिपः ।
मेघरागं स रामाभिरगायत्तुम्बुरूपमः ॥ ५३३ ॥
कदाचित् क्रीडावापिषु भृङ्गीभिर्लोललोचनाः ।
असिञ्चन् कामतप्ताङ्गीः स करीव करेणुकाः ॥ ५३४ ॥
एवं विषयसेवां स वितन्वानो दिवानिशम् ।
दिवसान् गमयामास हर्षोत्कर्षमयानिव ॥ ५३५ ॥
अन्येद्युर्मन्त्रिणो भूपमुपरुध्य महाग्रहात् ।
एवं विज्ञपयामासुर्मृद्वीकारम्यया गिरा ॥ ५३६ ॥
स्वप्नदृष्टं यथा पुंसः क्षणमात्रं सुखायते ।
प्रबुद्धस्य न तत् किञ्चिदेवं विषयजं सुखम् ॥ ५३७ ॥
शब्दादिविषयाऽऽसक्ता धर्ममार्गपराङ्मुखाः ।
अजरामरवद् मूढाश्चेष्टन्ते नष्टचेतनाः ॥ ५३८ ॥
विषयेषु निषीदन्तो न जानन्ति हिताऽहितम् ।
शृण्वन्ति न हितं वाक्यमेडमूका इवानिशम् ॥ ५३९ ॥
आदौ हृद्यरसाऽऽस्वादाः पर्यन्ते परितापिनः ।
विषया विषवत् त्याज्याः पुंसा स्वहितमिच्छता ॥५४०॥
एकवारं विषं हन्ति भुक्तमेव न चिन्तितम् ।
विषयाश्चिन्तनादेव बहुधा च विनाशकाः ॥ ५४१ ॥
भाता अपि नरैः कामा दुःखं ददति देहिनाम् ।
क्षणात्तुष्टाः क्षणाद् रुष्टा गन्धर्वनगरोपमाः ॥ ५४२ ॥
विषयेषु प्रसक्तानां कन्दर्पाज्ञाविधायिनाम् ।

लोकद्वयविघातिन्यो जायन्तेऽनर्थवीथयः ॥ ५४३ ॥
एतेषामबलामूलं शूलं निर्वृतिसंपदः ।
पश्य धर्मधरो राजा स्त्रियः पञ्चत्वमासदत् ॥ ५४४ ॥
तथाह्यत्रैव स क्षेत्रे नगरे पुण्डवर्द्धने ।
राजा धर्मधरो नाम दुर्द्धरो वैरिभूभुजाम् ॥ ५४५ ॥
तत्रैव नगरेऽस्ति स्म ब्राह्मणो गोधनाभिधः ।
सावित्री प्रेयसी तस्य सावित्री ब्रह्मणो यथा ॥ ५४६ ॥
साऽन्यदा भूभुजा दृष्टा निःसमानवपुर्लता ।
हठादन्तः पुरे क्षिप्ता कामिनां का विवेकता ? ॥ ५४७ ॥
गृहीतां गृहिणीं ज्ञात्वा ब्राह्मणो वेदपारगः ।
मुष्टो मुष्ट इति चिरं व्याजहार घृणाकरम् ॥ ५४८ ॥
प्रिये ! प्राणप्रिये ! हा ! हा ! स्मेरपङ्करुहानने ! ।
प्रियेऽहं त्वां विना कस्माद् गताऽसि नृपवेश्मनि ? ॥५४९॥
त्वां विना दिवसा जाता दीर्घा मासोपमा मम ।
सर्वगां त्वां निरीक्षेऽहं विष्णुमूर्त्तिमिवाऽपराम् ॥ ५५० ॥
स्वाहा स्वधा कथङ्कारं करिष्ये त्वां विना प्रिये ! ।
धर्मक्रियाणां मूलं हि गृहिण्यो गृहमेधिनाम् ॥ ५५१ ॥
विलपन्निति षट्कर्मा भ्राम्यन् शून्यमनास्ततः ।
जगौ पञ्चपदीं तस्याः प्रेमपादपसारिणीम् ॥ ५५२ ॥
इतश्च तनयस्तस्य पञ्चवर्षप्रमाणभृत् ।
वाणिज्यकारकैरात्तो ही दुष्कर्मविजृम्भितम् ॥ ५५३ ॥
कालक्रमेण संपन्ना तस्य तद्द्वयजीविका ।
व्यतिक्रान्ते हि सप्ताहे दुःखं विस्मरति स्फुटम् ॥ ५५४ ॥
सावित्र्या सह भूपालो बुभुजे विषयान् सदा ।
साऽपि प्रेयःसुतस्नेहगेहादि व्यस्मरत्ततः ॥ ५५५ ॥
अन्यदा ब्राह्मणो राजसौधाग्रे मधुरस्वरम् ।
तस्याः पञ्चपदीं गायन् ददृशे जगतीभुजा ॥ ५५६ ॥

प्रियेऽमुं पश्य को न्वेष इति व्याकुरु सत्वरम् ? ।
साऽप्यूचे देव ! नैवाऽमुं जानेऽहं कोऽयमित्यपि ॥५५७॥
आज्ञाऽत्र राजपादानां यदि जानामि किञ्चन ।
उवाच भूपतिर्भद्रे ! परिणीतः पतिस्तव ॥ ५५८ ॥
निशम्येति च सा दध्यौ परिणीतः पतिश्च यः ।
तं न वेद्मि महाभाग ! धिग् मां कामवशंवदाम् ॥ ५५९ ॥
अनेन भूभुजा शीलं मामकीनं विखण्डितम् ।
तदेनं खण्डयिष्यामि कृते प्रतिकृतिः शुभा ॥ ५६० ॥
अवहित्थमथाऽऽदृत्य दिनं निर्गम्य दुःखिता ।
निशायां भूभुजं सुप्तं निजघान घनेर्ष्यया ॥ ५६१ ॥
इतश्च यामिकानां सा वञ्चयित्वा दृशो निशि ।
स्वकीयाऽऽवासमायासीदपश्यच्च निजं प्रियम् ॥ ५६२ ॥
अङ्गुष्ठमोटनाच्चक्रे निद्राच्छेदममुष्य सा ।
केयं देवीति निध्यायन्नुपविष्टो द्विजोऽभवत् ॥ ५६३ ॥
प्राणप्रिय ! प्रिया तेऽस्मि सावित्रीति विचिन्तय ।
एतावन्ति दिनान्यस्थामपश्यन्ती छलं क्वचित् ॥ ५६४ ॥
इदानीं तु छलं प्राप्य समागां तव संनिधौ ।
त्वत्पादौ शरणं मे स्तां गुरुः[1] स्त्रीणां पतिर्यतः ॥ ५६५ ॥
अकस्माद्दीर्घपृष्ठेन पृष्ठे दष्टोऽथ स द्विजः ।
भीतैरिव विषावेगात् प्राणैश्च मुमुचे क्षणात् ॥ ५६६ ॥
गतप्राणं प्रियं प्रेक्ष्य विज्ञातनिजचेष्टिता ।
तस्यामेव निशीथिन्यां चलिता पश्चिमां प्रति ॥ ५६७ ॥
कतिभिर्दिवसैः प्राप नगरं पाटलाभिधम् ।
देवतामन्दिरं चैकं निरैक्षिष्ट मनोहरम् ॥ ५६८ ॥
इतश्चाऽगात्कामदंष्ट्रा वेश्या वैशिकमन्दिरं ।
विलोललोचनामेनां विलोक्य ध्यातवत्यसौ ॥ ५६९ ॥

१ पतिरेव गुरु स्त्रियामित्यपि ।

स्थानभ्रष्टा च रुष्टा च नष्टा कष्टादुपागता ।
अस्मदावासयोग्याऽसौ योग्या कुसुमधन्विनः ॥ ५७० ॥
ध्यात्वेति पुत्रि ! जामेयि ! कथं नागा गृहे मम ? ।
दैवादुपागते दुःखे का त्रपा मातृमन्दिरे ? ॥ ५७१ ॥
इत्युक्त्वा निजबाहुभ्यामुपगृह्य पणाङ्गना ।
दृशौ बाष्पाऽञ्चिते कृत्वा तां निनाय निजालयम् ॥५७२॥
स्नपयित्वा च तां प्रीत्या विलिप्तां चन्दनद्रवैः ।
गणिका चन्द्रिकाशुभ्रे वाससी पर्यधापयत् ॥ ५७३ ॥
आगच्छद्भिश्च गच्छद्भिर्नरैः प्राभृतसंभृतैः ।
देवता सकलेवाऽसौ सेव्यते स्म दिवानिशम् ॥ ५७४ ॥
अन्येद्युर्ग्रहणं दत्वा स्थितः कश्चिद्धनेश्वरः ।
रमयित्वा निशां सर्व्वा प्रातः पृष्टेति तेन सा ॥ ५७५ ॥
कौतस्कुताऽसि रंभोरु ! किमाख्याऽसि सुलोचने ! ? ।
त्वां दृष्ट्वा मे मनोजातं प्रेमार्द्र तन्वतो वद ॥ ५७६ ॥
साऽप्याख्यद् मूलतो वृत्तं नामस्थानपुरस्सरम् ।
ततः शय्यातलं मुक्त्वा विदूरस्थो जगाद सः ॥ ५७७ ॥
तव सूनुरहं मातर्हृतो वाणिज्यकारकैः ।
हा ! अकार्यमिदं वृत्तं चण्डालैरपि वर्ज्जितम् ॥ ५७८ ॥
यद्यहं खण्डशः कृत्वा देहं वह्नौ दहाम्यहो ! ।
तथाप्यमुष्य पापस्य पारं गच्छामि न क्वचित् ॥ ५७९ ॥
अदृष्टव्येष्वहं नूनमद्रष्टव्यशिरोमणिः ।
अग्राह्यनामकेभ्योऽपि प्रथमः पृथिवीतले ॥ ५८० ॥
त्वद्भुवनं प्रविष्टोऽहं निषिद्धः शकुनैर्नहि ।
अथवा तेऽपि भाव्यर्थं विहन्तुं शक्नुवन्ति न ॥ ५८१ ॥
पातकं क्षालयिष्यामि तदहं वह्निसाधनात् ।
अत्युग्रकृतपापस्य नाऽन्या काचिद् गतिर्मम ॥ ५८२ ॥
अथैनां स नमस्कृत्य गत्वा निजकुटीं प्रगे ।

दत्त्वा दानानि दीनेभ्यो भस्मसात्समजायत ॥ ५८३ ॥
साऽपि तद् दुष्कृतं प्रोचे वेश्यायाः पुरतो निजम् ।
मातरग्निं प्रवेक्ष्यामि सुवर्णमिव शुद्धये ॥ ५८४ ॥
पुत्रि ! चान्द्रायणादीनि व्रतानि विविधान्यपि ।
विधाय दुष्कृतं सर्वं प्रक्षालय शुभाशये ! ॥ ५८५ ॥
दत्त्वा दानानि तीर्थेषु पुत्रि ! पातकमुत्सृज ।
नेदं तत्र वपुः सोढा हुताशं स्फुरदर्चिषम् ॥ ५८६ ॥
महातीर्थनमस्कारात् तिलस्वर्णादिदानतः ।
पुत्रसङ्गादिकं पापं प्रयाति क्षयमञ्जसा ॥ ५८७ ॥
एवं स्मार्त्तानि वाक्यानि श्रावयन्ती द्विजाऽऽननात् ।
दिनयामत्रयं यावत् खेदिता सा पणाङ्गना ॥ ५८८ ॥
नवीनैर्दर्शनैर्मातः! करिष्ये भोजनं स्फुटम् ।
इति मे निश्चयो धर्म्मकार्ये विघ्नक्रियेति किम् ? ॥५८९॥
इति निश्चयमेतस्याः परिज्ञायाऽथ कुट्टिनी ।
ऊचे द्रव्यमिदं सर्वं कृतार्थीकुरु दानतः ॥ ५९० ॥
ततः सा विहितस्नाना ददाना दानमद्भुतम् ।
चितापार्श्वे समागत्य पौरलोकसमाकुला ॥ ५९१ ॥
चितां प्रदक्षिणीकृत्य विवेशाऽग्नौ पणाङ्गना ।
इतोऽभूद् डामरो वातो महावृष्टिरजायत ॥ ५९२ ॥
तदङ्गस्पर्शभीत्येव ज्वलनो ज्वलितोऽपि सन् ।
निर्वाणः, नागरो लोकः प्रनष्टो जलताडितः ॥ ५९३ ॥
किंचिद् दग्ध्वा ततो वेश्या निर्गत्य चितिमध्यतः ।
सरयूसरितस्तीरे पपात चितिदारुवत् ॥ ५९४ ॥
स्तोकाम्भसि शफरीव वेपमाना मुहुर्मुहुः ।
रोदयन्ती दिशां चक्रं चक्रन्द कुररीव सा ॥ ५९५ ॥
विरते वारिदे हृष्टः कोऽपि गोपः समापतत् ।
शुश्राव रुदितं तस्या निशीथे करुणापरः ॥ ५९६ ॥

काचित्पावकदग्धेति ज्ञात्वा गोपाधिपेन सा ।
गृहीता स्वौकसि प्रीत्या स्पृष्ट्वाऽङ्गानि मृदूनि च ॥ ५९७ ॥
एरण्डपत्रजीर्णाद्यैरुत्तार्य ज्वलनं ततः ।
उल्लाघा विदधे कालक्रमेण पणसुन्दरी ॥ ५९८ ॥
(युग्मम्)

ततः कलत्रमस्याऽभूदेषा विधिविजृम्भणात् ।
जन्मान्तरशतानि स्युरेकस्मिन्नपि जन्मनि ॥ ५९९ ॥
स गोपाधिपतिर्भ्राम्यन् दुर्दूरूढपुरेऽगमत् ।
नैकत्र स्थितिरेतेषां शरत्पाथोमुचामिव ॥ ६०० ॥
सा चूतपल्लवीच्छन्नविग्रहा गोपगेहिनी[1] ।
मस्तकन्यस्तदध्याऽऽज्यनवनीतादिभाजना ॥ ६०१ ॥
तक्रं गृह्णीत गृह्णीत वदन्ती सुदती भृशम् ।
इन्द्रकीले स्खलित्वाऽसौ पपात चललोचना ॥ ६०२ ॥
पुस्फुटुस्तत्र भाण्डानि मूर्खनिर्दिष्टमन्त्रवत् ।
ततोऽन्याभिरियं स्नेहाद् बभणे गोपकामिनी ॥ ६०३ ॥
सखि ! भग्नानि भाण्डानि, करिष्यसि किमुत्तरम् ? ।
निजस्य पुरतः पत्युर्निकेतनगता सती ॥ ६०४ ॥
किंचिद् विहस्य साऽप्यूचे सख्यः ! शोचामि किं ननु ? ।
शोचनीयं मया प्राज्यमनृणं हि ऋणं बहु ॥ ६०५ ॥
हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं
देशान्तरे विधिवशाद् गणिकाऽस्मि जाता ।
पुत्रं भुजङ्गमधिगम्य चितां प्रविष्टा
शोचामि गोपगृहिणी कथमद्य तक्रम् ?॥ ६०६ ॥
एवं लोलेक्षणावृत्तं श्रुत्वा भोगपुरेश्वर ! ।
जीवितव्यव्ययकरीं विषयाशां श्लथीकुरु ॥ ६०७ ॥
मित्रानन्दस्ततोऽवोचद् युष्मदुक्तकथाश्रुतेः ।

---

१ गेहिनीत्यपि ।

विषयेभ्यो निवृत्तोऽपशकुनेभ्य इवाध्वगः ॥ ६०८ ॥
प्रसरत् सलिलं यद्वत्सेतुबन्धेन बाध्यते ।
यद्वत् तुरग उन्मार्गप्रसक्तो वरसादिना ॥ ६०९ ॥
यथा कुलवधूः पत्या स्वैरिणी गणसङ्गिनी ।
अप्रवृत्तिप्रवृत्तौ राट् तथाऽऽचार्यैः सुमन्त्रिभिः ॥ ६१० ॥
( युग्मम् )
भवन्तो गुरवोऽस्माकं भवन्तः सुहृदोऽपि च ।
भवन्तो नयनप्राया भवन्तश्च विपश्चितः ॥ ६११ ॥
अन्येद्युश्चन्द्रशालायामास्थितः पृथिवीपतिः ।
अपश्यत् स्फारशृङ्गारं जनं यान्तं पुरो बहिः ॥६१२॥
राजँस्तव वरोद्याने केवली सुव्रताभिधः ।
समागादित्युवाचोच्चैः कश्चित् पृष्टो महीभुजा ॥६१३॥
मित्रानन्दः कृतानन्दः सचिवैः सह वन्दितुम् ।
नत्वा गत्वा मुनिं भक्त्या विनिविष्टः कृताञ्जलिः ॥६१४॥
मुनिर्नृपतिमुद्दिश्य व्याजहारेति कोमलम् ।
आशापिशाची सुदृढा तया व्याप्तं जगत्त्रयम् ॥६१५॥
चिन्ताचक्रसमारूढो योगदण्डसमाहतः ।
प्राच्यकर्मकुलालेन भ्राम्यते घटवद् नरः ॥ ६१६ ॥
आतपच्छाययोर्यद्वत् सहाऽवस्थानलक्षणः ।
विरोधस्तद्वदत्राऽपि विज्ञेयः सुखवाञ्छयोः ॥ ६१७ ॥
वाञ्छा चेन्न सुखं जन्तोस्तदभावे परं सुखम् ।
न भूतानि न भावीनि सुखानि सह वाञ्छया ॥ ६१८॥
जीवान्निरागसो घ्नन्ति मृषावादं वदन्ति च ।
कुर्वन्ति कूटदम्भादि वञ्चयन्ति निजानपि ॥ ६१९ ॥
पूज्येभ्योऽपि हि द्रुह्यन्ति निन्दन्ति स्वगुरूनपि ।
आरभन्ते महारम्भान् लुम्पन्ति ग्रामनैगमान् ॥ ६२०॥
गोहत्यां भ्रूणहत्यां च ब्रह्महत्यां च निस्त्रपाः ।

लोभान्धाः किं न कुर्वन्ति परद्रव्यजिघृक्षवः ? ॥६२१॥
लोभव्यालमहामन्त्रं दिग्प्रमाणाऽभिधं व्रतम् ।
समाहितैः प्रपन्नं यैस्तैः कृता प्राणिनां कृपा॥६२२॥
श्रुत्वेति जगतीनाथः काष्ठासु चतसृष्वपि ।
विशेषतो दिग्विरतौ योजनानां शतं व्यधात् ॥६२३॥
पुनः प्रणम्य निग्रन्थं ग्रन्थवद् वर्णभासुरः[1] ।
आगत्याऽऽत्रासमुर्वीशः श्राद्धधर्ममपालयत् ॥ ६२४ ॥
समभूदभ्यमित्रीणो मित्रानन्दो नृपोऽन्यदा ।
देशान्ते शत्रुभिः साकं संग्रामः समजायत ॥ ६२५ ॥
भूपेन निर्जिताः सर्वे बलीयांसोऽपि लीलया ।
तेषां प्रणश्यतां पृष्ठे गतो दूरं महीपतिः ॥ ६२६ ॥
स दूराऽतिक्रमं ज्ञात्वा राजा पप्रच्छ मन्त्रिणम् ।
कियन्मानां भुवं भद्र ! समायाता वयं पुरात् ॥६२७॥
मन्त्री प्रोवाच नगराद् योजनशतमागताः ।
ततोऽसौ चिन्तयामास स्मृतादिग्विरतिव्रतः ॥६२८॥
न गन्तव्यं मया क्वापि योजनानां शतात्परम् ।
ईदृक्षो नियमोऽग्राहि केवलज्ञानिनोऽन्तिके ॥ ६२९ ॥
अथ मौनपरं भूपं दृष्ट्वा मन्त्री व्यजिज्ञपत् ।
क्रियतां सत्वरं देव ! प्रयाणकमभिद्विषः ॥ ६३० ॥
यस्मात्सन्ति महीपाल ! शत्रवोऽभ्यर्णचारिणः ।
अथ प्रोवाच भूपालो नाऽहं गन्तास्म्यऽतः परम्॥६३१॥
दिग्विरतिव्रते मन्त्रिन् ! समास्ति मम[2] निश्चयः ।
नाऽतः प्रयाणं कर्त्तास्मि श्रेयोनिश्चयपालनम्॥६३२॥
सुस्थाऽवस्थासु भूपाल ! पाल्यतां नियमस्थितिः ।
विधुरे प्रोद्गते सर्वं कार्यं कार्यं यथाविधि ॥ ६३३ ॥
विशेषाद् विधुरे मन्त्रिन् ! कार्यं नियमपालनम् ।

१ -भासुरमित्यपि । २ मिति- इति च ।

धीराणां कातराणां च व्यसने लभ्यतेऽन्तरम् ॥६३४॥
अथाऽनापृच्छ्य भूपालं मन्त्री नीतिघटस्ततः ।
किञ्चित् सैन्यं समादाय प्रतस्थे द्विड्जिगीषया ॥६३५॥
अतिश्रान्तं बलं ज्ञात्वा मन्त्रिणोऽ[1]रिमहीभुजः ।
विजिग्यिरे ततो नीतिघटं जघ्नुश्च लीलया॥ ६३६ ॥
मन्त्रिणं नृपतिः श्रुत्वा कालधर्ममुपागतम् ।
आचार्यानेव तुष्टाव भवाम्भोधिघटोद्भवान्॥ ६३७ ॥
यैर्मे नियमदानेन प्रदत्तमिह जीवितम् ।
प्रणम्य तत्पदद्वन्द्वं ग्रहीष्यामि महाव्रतम् ॥ ६३८ ॥
इति निश्चयमादाय चचले नगरं प्रति ।
मार्गस्याऽर्धे च तान् राजा दृष्टवान् मुनिपुङ्गवान्॥६३९॥
तेषां गुरूणामभ्यर्णे भवार्णवतितीर्षया ।
अगृह्णाद् भूमिपालोऽथ व्रतं निर्ग्रन्थसेवितम् ॥६४०॥
महाव्रतं परिपाल्य यथोक्तं नृपसंयमी ।
जगामाऽप्यच्युतं कल्पं तस्मात्सिद्धिमवाप्स्यति ॥६४१॥
कथान्ते न्यगदद् राजा शिरःप्रणतिपूर्वकम् ।
धन्योऽसौ दिग्मितौ येन विशुद्धो नियमः कृतः॥६४२॥
भोगोपभोगयोः संख्या क्रियते या महीपते ! ।
भोगोपभोगनामाऽस्ति तद् द्वितीयं गुणव्रतम्॥६४३॥
भोज्यभेदात् कर्मभेदादिदं संभवति द्विधा ।
भोज्येषु बहुबीजानि खरकर्माणि कर्मसु ॥ ६४४ ॥
भोज्यभेदे फलं सर्वमज्ञातं बहुबीजवत् ।
अनन्तकायमांसानि मद्यपानं निशाऽशनम् ॥ ६४५ ॥
न्यग्रोधोदुम्बरप्लक्षकाष्ठोदुम्बरभूरुहाम् ।
श्रीवृक्षस्य च नो भोज्यं श्राद्धैर्जीवाऽऽकुलं फलम् ६४६
अपक्वं गोरसोन्मिश्रपुष्पितं द्वि[2]दलं तथा ।

---

१ -पि महीभुज , एवमपि । २ विदलमित्यपि ।

अहर्द्वयमतिक्रान्तं दध्यन्नं कथितं त्यजेत् ॥ ६४७ ॥
इदं भोजनतः प्रोक्तं कर्मतोऽङ्गारकर्म च ।
वनच्छेदं शाकटं च भाटकं स्फोटकर्म च ॥ ६४८ ॥
रसकेशविषाणां तु वाणिज्यं दन्तलाक्षयोः ।
यन्त्रपीडानिर्लाञ्छनदवदानानि कानने ॥ ६४९ ॥
सरःशोषविडालश्वकुक्कुटादिकपोषणम् ।
धर्मार्थी वर्जयेन्नित्यं जीवेषु करुणापरः ॥ ६५० ॥
भोगोपभोगविरतिं ये कुर्वन्ति मनीषिणः ।
ते लभन्ते सुखं भीमभीमसेनौ यथाश्रुतौ ॥६५१॥
संनिवेशे निवेशाख्ये व्रजव्रजविराजिनि ।
अभूतां भ्रातरौ भीमभीमसेनाऽभिधावुभौ ॥६५२॥
पूर्वाऽपरपयोराशिपर्यासाविव युगक्षये ।
सर्वदिग्संभवाः क्रूरा अमिलंस्तस्करास्तयोः ॥६५२॥
धनान्यहरतां सार्द्धं तस्करैर्गोधनान्यपि ।
बभञ्जतुः पुराण्युच्चैरगृह्णीतां प्रवासिनः ॥६५४॥
अन्येद्युर्विमहासत्त्वाः पावयन्तो महीतलम् ।
तत्राऽऽचार्याः समाजग्मुः शमश्रीपुरुषोत्तमाः ॥६५५॥
अथाऽऽविरभवद् व्योम्नि प्रचण्डा घनमण्डली ।
मण्डलीकृतसुत्रामाऽखण्डकोदण्डमण्डना ॥६५६॥
पद्व्यस्तटिनीयन्ते वार्द्धीयन्ते सरिद्वराः ।
सरांसि मानसायन्ते वरीवृषति वारिदे ॥६५७॥
जनानामपि संचारो निषिद्धः प्रसृतैर्जलैः ।
का पुनर्यमिनां वार्त्ता प्रासुकाध्वविहारिणाम् ? ॥६५८॥
आचार्यैः प्रेषितं साधुयुगलं विपुलं धिया ।
तत्तयोः पार्श्वमागत्य बभाषे निपुणं वचः ॥६५९॥
आयुष्मन्तौ ! भवत्पार्श्वे प्रेषितौ गुरुणाऽधुना ।

१ कथितमपि ।

वर्षाकालः समायातो न गन्तुं युज्यते क्वचित् ॥६६०॥
मुनिर्वाचमिमां श्रुत्वा बभाषाते इति स्फुटम् ।
अत्र तिष्ठन्तु निष्ठां स्वां तन्वाना गुरुभिः समम्॥६६१॥
अन्नप्रभृति यत्किञ्चिद् रोचते वो निरन्तरम् ।
तत्सर्वं भवद्भिर्ग्राह्यं लक्ष्मीदानफला ! यतः ॥६६२॥
अवोचतां मुनी भद्रौ ! न निग्रन्थानां कल्पते ।
एकस्मिन्नपि संस्त्याये ग्रहीतुमशनादिकम् ॥६६३॥
यतः–
यथा द्रुमस्य पुष्पेषु रसं पिबति षट्पदः ।
न च पुष्पं क्लामयति स स्वं प्रीणाति नित्यशः॥६६४॥
तथा सुसाधवो धीराः प्रविष्टा गोचरक्षणे ।
गृहेषु गृह्णते भिक्षामगृद्धा रससंपदि ॥६६५॥
भो ! भो ! भद्रौ ! परं शुद्धं स्त्रीषण्डपशुवर्जितम् ।
कुलीनजनगेहाऽन्तः संप्रदत्तामुपाश्रयम् ॥६६६॥
यतः–
यो ददात्याऽऽश्रयं ज्ञानशालिनां तत्त्वमालिनाम् ।
वस्त्रान्नपानशय्यादि सर्वं प्राऽदायि तेन यत् ॥६६७॥
परोपकारः स्वाध्यायो ज्ञानाऽभ्यासश्च संयमः ।
एतन्निर्मापितं तेन येन दत्त उपाश्रयः ॥६६८॥
प्राप्नोति राज्यचक्रित्वस्वर्गिशक्राश्रियं नरः ।
उत्पत्तिं सुकुले कीर्त्तिं स्फुर्त्तिं च जनपर्षदि ॥६६९॥
शय्यादानप्रभावेण भवाब्धिं तरति क्षणात् ।
अतः शय्यातरस्तीर्थंकरैः सर्वैरुदाहृतः ॥६७०॥
निशम्येति मुनिप्रोक्तमभ्यधत्तां मुनीन् प्रति ।
असावुपाश्रयः साधू ! गृह्यतां विधिपूर्वकम् ॥६७१॥
तत्राऽस्थुः सूरयः श्रीमत्सिद्धान्तार्थस्य वाचनाम् ।
वितन्वानाः समाधानं सावधानस्वमानसाः ॥६७२॥

तावपि शृणुतः स्मोच्चैः सिद्धान्तध्वनिमुत्तमम् ।
अशृण्वानौ पदव्याख्यां दृष्टान्तास्थितिशालिनीम् ॥६७३॥
वर्षारात्रे व्यतिक्रान्ते शोषमायाति कर्दमे ।
कूलमध्यप्रवाहासु कूलिनीषु समन्ततः ॥६६४॥
शरत्कालश्रियो हासे कामे पुष्यति सर्व्वतः ।
विहारं कर्तुमारब्धा आचार्याः साधुचर्यया ॥६७५॥ (युग्मम्)
द्वावपि भ्रातरौ सूरीननुगन्तुं शुभाशयौ ।
गर्भश्राद्धोपमौ भक्त्या प्रवृत्तौ सपरिच्छदौ ॥६७६॥
उचिते भूमिभागेऽधः सूरिः स्थित्वा प्रशान्तगीः ।
उवाच भद्रकौ ! वाक्यमास्माकीनं निशम्यताम् ॥६७७॥
शुद्धान्नपानदानेन सान्निध्याद् भवतोरिह ।
सौख्येन संस्थिता वर्षारात्रमेकदिनं यथा ॥६७८॥
आज्ञया जिनराजस्य निर्ग्रन्थभटवेष्टिताः ।
वयं मोहरिपुं जेतुं चलिताः सैन्यपा इव ॥६७९॥
धर्मश्रवणमस्माकं न जातं भवतोः क्वचित् ।
परमेकं वचश्चारु विधेयं शुभवृद्धये ॥६८०॥
अभिग्रहाणामन्येषां भवन्तो न सहिष्णवः ।
रात्रिभुक्तिपरीहारो भावशुद्ध्या विधीयताम् ॥६८१॥
यतः—
भ्रमन्ति सर्वतो भीमा रजन्यां रजनीचराः ।
अतो निशि न भोक्तव्यं दुष्टवेलेति दूषणात् ॥६८२॥
मक्षिका कुरुते वान्ति प्रज्ञां हन्ति पिपीलिका ।
कोलिकः कुष्ठरोगं तु विधत्ते निशि भोजनात् ॥६८३॥
स्वरभङ्गं कचः कुर्यादलिर्विध्यति तालु च ।
दोषानेवंविधान् ज्ञात्वा रात्रौ कोऽश्नाति कोविदः ? ६८४
आयुर्वर्षशतं लोके तदर्द्धं स उपोषितः ।
करोति विरतिं धन्यो यः सदा निशि भोजनात् ॥६८५॥

आचार्योक्तमिति श्रुत्वा संवेगरसरङ्गितौ ।
प्रापद्येतां व्रतं रात्रिभोजनप्रतिषेधकृत् ॥६८६॥
आचार्या अपि निर्ग्रन्थैः सार्द्धमन्यत्र धीधनाः ।
विजहुः कोकिला भृङ्गा हंसा न नियता यतः ॥६८७॥
अन्येद्युस्तावपि प्रति ग्रामे धाटीं विधाय च ।
अगृह्णीतां धनान्युच्चैर्गोधनानि विशेषतः ॥६८८॥
तयोः परिच्छदैः पापैर्निवृत्तैः प्रान्तरान्तरे ।
पीनाङ्गो महिषः कोऽपि हतो धौतैः परश्वधैः ॥६८९॥
कैश्चित् प्रविश्य ग्रामान्तः क्रीतं मैरेयमुच्चकैः ।
पुंसां पापप्रवृत्तानां सर्वव्यसनसंभवः ॥६९०॥
अनयोः पत्तिभिश्चैवं चिन्तितं दुष्टमानसैः ।
मारयामो विषं दत्त्वा मदिराक्रायिकान् यदि ॥६९१॥
एतत्सर्वं धनाद्युच्चैरस्माकं भागवर्जितम् ।
सकलं जायते यस्मान्मारणीया विभागिनः ॥६९२॥
मैरेयक्रायिकैरेवं ध्यात्वेति गरलं क्षणात् ।
मदिष्ठायां म्रदिष्ठायां चिक्षिपे गन्धधूलिवत् ॥६९३॥
तदीयविषदानस्य शङ्कया पादचारतः ।
अस्तपर्वतमारुह्य पपाताऽम्भोनिधौ रविः ॥६९४॥
प्रसस्रे तिमिरैर्विष्वग् नागपूगानुजैरिव ।
घूकैर्जुघुषिरे भीमै रक्षोमङ्गलतूर्यवत् ॥६९५॥
अथोभयेऽपि मिलितास्तस्कराः क्रूरचेष्टिताः ।
परस्परं निजं वस्तु प्राभृतं विदधुस्तदा ॥६९६॥
स्वामिनौ! पश्यतामेतत्सुस्वादरसपेशलम् ।
अथोचतुर्महाभागौ निषेधो रात्रिभोजने ॥६९७॥
सुस्थाऽवस्थासु नेतारौ! पालयतां नियमस्थितिः ।
शरीरमाद्यं सर्व्वत्र साधकं धर्म्मकर्म्मणि ॥६९८॥
हंहो! भद्रमुखास्तेषां गुरूणां पादसंनिधौ ।

विदधे नियमस्तस्य भङ्गः किं श्रेयसे खलु? ॥६९९॥
शूरः स एव यः संख्ये भिनत्तीभरदद्वयम् ।
वादी स एव यो राजसभायां युक्तियुक्तगीः ॥७००॥
गुरुः स एव यस्तत्त्वं शास्तोपासकपर्षदि ।
भव्यः स एव यः सम्यक् परिपालयति व्रतम्॥७०१॥
एतयोर्गिरमाकर्ण्य ततस्तत्त्वार्थसाधिकाम् ।
अथान्ये तस्करास्तद्वदन्योन्यस्य ददुस्तराम् ॥७०२॥
ततो विषोत्थकीलाभिः कल्पकालानलैरिव ।
तेषामायुर्द्रुमो देहे सापायं हन्त जीवितम् ॥७०३॥
एतान् पञ्चत्वमापन्नान्वीक्ष्य तौ हृदि वभ्रतुः ।
गुरुणा व्रतदानेनऽऽवयोर्दत्तं हि जीवितम् ॥७०४॥
तेषां गुरूणां सातत्यं परोपकृतिकारिणाम् ।
भवावो भुवि जीवन्तावनृणत्वपरौ कथम्? ॥ ७०५ ॥
तेषामेव गुरूणां तौ पार्श्वे जगृहतुर्व्रतम्।
जग्मतुरच्युतं कल्पं तस्मान्निर्वाणमेष्यतः ॥ ७०६ ॥
आकर्ण्यतां सकर्णेन वर्ण्यमानं मितैः पदैः ।
अनर्थदण्डविरतिस्तार्तीयीकी गुणव्रतम् ॥ ७०७ ॥
आर्तरौद्रे अपध्याने विना स्वार्थं परस्य च ।
पापोपदेशः सोऽनर्थदण्ड इत्यभिधीयते ॥ ७०८ ॥
येऽनर्थदण्डमीदृक्षं कुर्वते क्रूरचेष्टिताः ।
ते दुःखभागिनो लोके लोभनन्द्यादिको यथा ॥७०९॥
तथाहि समभूत् ख्यातं पुरं भोगपुराभिधम् ।
ताराचन्द्राभिधस्तत्र श्रेष्ठी श्रेष्ठगुणाकरः ॥ ७१० ॥
संपूर्णसर्वसामग्र्याः प्रकृष्टीकृतनाविकः ।
गृहीतभूरिभाण्डौघः सुभटैरुद्भटैः समम् ॥ ७११ ॥
आशुगो वायुवत्पोतो लङ्घयन्मकराकरम् ।
रत्नमेखलनामानं महाद्वीपमुपेयिवान् ॥ ७१२ ॥

तस्मादुत्तार्य भाण्डानि कूले कूलंकषापतेः ।
उत्करान् कारयामास श्रियां क्रीडाऽचलानिव॥ ७१३॥
पुरन्दरपुरं प्राप्य श्रिया पौरन्दरं पुरम् ।
तत्राऽभूद् भूपतिः स्फीतवाहनो मेघवाहनः ॥ ७१४॥
लोभनन्दीति तत्राऽभूत् सत्यार्थो वणिजां पतिः ।
पापकर्मरतो नित्यं महामोहनिकेतनम् ॥ ७१५ ॥
तत्रैव नगरे मन्त्री काणको वञ्चनामतिः ।
बुद्ध्या गृहीतद्रविणः परेषां पश्यतामपि ॥ ७१६ ॥
तयोर्मन्त्रधियां पात्रं सत्रागारमिवैनसाम् ।
सुशिल्पी चर्मकारोऽस्ति मायामय इतीरितः ॥ ७१७ ॥
सवितुर्मन्दिरे शान्तो द्विजो होराविचक्षणः ।
अविद्यमाननेत्रोऽपि त्रिलोचन इति स्मृतः ॥ ७१८ ॥
इतश्च लोभनन्द्येष श्रुत्वा पोतं समागतम् ।
ताराचन्द्राऽन्तिके प्राप गृहीत्वा प्राभृतं निशि ॥७१९॥
संभाषमुचितं कृत्वा पप्रच्छाऽस्वच्छमानसः ।
पोतभाण्डं कियद् भद्र ! ममाऽशेषं निगद्यताम् ॥७२०॥
प्राञ्जलत्वात्ततस्तेन सर्वमुक्तं यथास्थितम् ।
शिरो विधूय तेनापि सखेदमिव भाषितम् ॥ ७२१ ॥
प्रयास एव जातस्ते कुभाण्डाऽऽनयनात् परम् ।
यस्मादमीषां न क्वापि विक्रयः कपिवद् भवेत् ॥ ७२२ ॥
हंहो ! तथापि गृह्णेऽहं पुरा कीर्त्तिभयात् परम् ।
दास्येऽहं प्रस्थमेकं ते निजमानसवाञ्छितम् ॥ ७२३ ॥
तथाऽऽदृतमनेनापि सत्यङ्कारः समर्पितः ।
लग्नका विहिताः पौरा भाण्डं दृष्ट्याहतं कृतम् ॥ ७२४ ॥
परकीयाऽपि मेऽद्य श्रीरात्मीयेति विचिन्तयन् ।
गत्वा गृहं सुखं सुप्तः सुतोद्वाहक्षणादिव ॥ ७२५ ॥

१ प्राप्त, इत्यपि ।

द्वितीये यामिनीयामे सचिवो वञ्चनामतिः ।
ताराचन्द्रं छलयितुं हृष्टः प्राप तदन्तिके ॥ ७२६ ॥
उचितप्रतिपत्त्याऽसौ ताराचन्द्रेण विष्टरे ।
उपविश्य पप्रच्छेऽथ स्वागतं मन्त्रिणोऽन्तिके ॥ ७२७ ॥
मन्त्रिणा वार्त्तावसरे भणितं क्रूरचेतसा ।
पुराऽहं चौरवत् क्षिप्तश्चारके जगतीभुजा ॥ ७२८ ॥
तस्मात् कथञ्चिद् नष्ट्वाऽहं पोतादुत्तीर्य सागरम् ।
पुरं भोगपुरं प्राप त्वत्पितुः सदनं स्थितः ॥ ७२९ ॥
मया समक्षं लोकानां चक्षुर्मुक्त्वाऽथ दक्षिणम् ।
जगृहे स्वर्णलक्षश्च ततोऽत्राऽऽगां नृपान्तिके ॥ ७३० ॥
तन्मङ्गल्यपदे दत्वा क्षमयित्वा स्वदुर्नयं ।
पूर्ववत्सचिवो जातो द्रव्यात् किं न प्रजायते ? ॥ ७३१ ॥
मत्पुण्यैस्त्वमिहायातः स्वर्णलक्षमिदं सखे ! ।
गृहाणाऽर्पय मे चक्षुर्व्यवहारं प्रवर्त्तय ॥ ७३२ ॥
दत्ते मे लोचने भद्र ! कर्त्तव्यो भाण्डविक्रयः ।
आहारे व्यवहारे च सज्जा लज्जा सतां न यत् ॥ ७३३ ॥
इत्युक्त्वा सचिवे याते विमनाः पोतनायकः ।
चिन्तया रजनीयामयुगं युगमिवाऽनयत् ॥ ७३४ ॥
मायामयो महामायः पर्यटंस्तत्कुटीतटे ।
आगात् सन्धापयाञ्चक्रे वणिजो पादरक्षणम् ॥ ७३५ ॥
चर्मकारस्ततः प्राह किं मे दास्यथ वेतनम् ? ।
पोतनाथ उवाच त्वां तोषयिष्यामि सर्वथा ॥ ७३६ ॥
कृतकार्यममुं दृष्ट्वा सोऽथाऽवोचत रूपकम् ।
द्रम्मं द्रम्माष्टकं द्रम्मशतं वा त्वं गृहाण भोः ! ॥ ७३७ ॥
ततो द्रम्मसहस्रेषु दीयमानेषु तेन तु ।
नायं सन्तोषवान् जातः किं पुनर्भूरिवाञ्छकः ? ॥ ७३८ ॥
अथोचे चर्मकृद् श्रेष्ठिन् ! पोतपण्यं ममाखिलम् ।

यद्यर्पयसि तत्तोषो जायते मम नान्यथा ॥ ७३९ ॥
ममानुज्ञां विना पण्यं चेद्विक्रेष्यसि किञ्चन ।
तद् भूपाज्ञाविभङ्गस्य कारयिष्यामि कारणम् ॥ ७४० ॥
एवमुक्त्वाऽगमच्चर्मकारः कारुककूटधीः ।
जगाम नगरस्यान्तस्ताराचन्द्रोऽपि पर्यटन् ॥ ७४० ॥
दृष्टो मदनमञ्जर्या वेश्यया शस्यरूपया ।
लक्षीकृतः कटाक्षाणां स साक्षाद्दिवसात्यये ॥ ७४२ ॥
आनायितो गृहे श्रेष्ठी प्रेष्य चेटीं सुलोचनाम् ।
स्नपितो भोजितो भक्त्या परमानन्दमेदुराम् ॥ ७४३ ॥
एवं निवसतस्तस्य कियन्त्यपि दिनान्यगुः ।
अन्येद्युः स तया पृष्टः कस्त्वं कस्मादिहागतः? ॥ ७४४ ॥
ततस्तेन स्ववृत्तान्तः समीचीनो निवेदितः ।
साऽवोचद् विपदः प्राप्तौ खेदः कार्यो न कोविदैः ॥७४५॥
आपदः संपदोऽप्यत्र समीपस्थाः शरीरिणाम् ।
न शोकहर्षयोस्तस्मादर्पणीयं मनो बुधैः ॥ ७४६ ॥
एवमुक्त्वाऽथ सा गत्वा नत्वा भट्टं त्रिलोचनम् ।
एवं विज्ञपयामास रूपाजीवा सुकोमलम् ॥ ७४७ ॥
मत्पतेस्तारचन्द्रस्य व्यसनं महदुत्थितम् ।
निस्तरिष्यति तत्सौख्यान्नवेति वद कोविद! ॥ ७४८ ॥
सोऽप्युवाच तव पतिर्व्यसनं निस्तरिष्यति ।
सुखेनाऽपि न खेदस्तत्त्वया कार्यो निजे हृदि ॥ ७४९ ॥
श्रुत्वेत्युपश्रुतिप्रायं हृष्टा वेश्यागृहं गता ।
यामिन्यां प्रेषयामास तारेन्दुं रविमन्दिरे ॥ ७५० ॥
प्रछन्नीभूय सूर्यस्य मन्दिरेऽस्थाद् वणिग्वरः ।
इतोऽभ्यागाच्छोभनन्दी छात्रेण विनिवेदितः ॥ ७५१ ॥
आख्याय पूर्ववृत्तान्तं श्रेष्ठिनोदितमीदृशम् ।
निरूपय निजां होरां निर्वाहो भविता नवा ॥ ७५२ ॥

होरां विचार्य सोऽप्यूचे यदीदं पोतनायकः ।
वक्ष्यते वचनं प्राज्ञस्तदा तत्र किमुत्तरम्? ॥ ७५३ ॥
न किंचित् शोभनं भद्र! भविता प्रत्युताऽऽपदं ।
श्रुत्वेति शून्यधीः प्राप मन्दिरं श्रेष्ठिसुन्दरः ॥ ७५४ ॥
अथाख्यत् तस्य पार्श्वस्थश्छात्रः पात्रं महाधियाम् ।
होराज्ञानस्य तत्त्वार्थं पुनः पाठय मां प्रभो! ॥ ७५५ ॥
तत्र पाठयितुं भट्ट उपाक्रमत सत्वरम् ।
विनेयविद्यादाने हि बुधाः स्युः सततोद्यमाः ॥ ७५६ ॥
वेदाध्ययनदानेषु देवार्चासु विषोद्धृतौ ।
पुरीधामप्रवेशेषु वामा होरा शुभा मता ॥ ७५७ ॥
संग्रामे भोजनस्नाने स्त्रीसंगे राजदर्शने ।
क्रूरकर्म्मसु शेषेषु दीप्ते वामेतरा मता ॥ ७५८ ॥
दक्षिणे यदि वा वामे यत्र वायुर्निरन्तरम् ।
तं पादमग्रतः कृत्वा निस्सरेद् निजमन्दिरात् ॥ ७५९ ॥
गुरुबुधनृपामात्या अन्येऽपीप्सितदायिनः ।
पूर्णाङ्गे खलु कर्त्तव्या कार्यसिद्धिमभीप्सता ॥ ७६० ॥
आसने शयने वाऽपि पूर्णाङ्गे विनिवेशिताः ।
वशीभवन्ति कामिन्यो न कार्म्मणमतः परम् ॥ ७६१ ॥
यदा पृच्छति चन्द्रस्थस्तदा संधानमादिशेत् ।
पृच्छेद् यदा तु सूर्यस्थस्तदा जानिहि विग्रहम् ॥ ७६२ ॥
चन्द्रस्थाने यदा वायुः सूर्यस्थाने च पृच्छति ।
तदा न रक्ष्यते रोगी मृत्योर्वैद्यशतैरपि ॥ ७६३ ॥
रविस्थाने यदा प्राणः प्रष्टा पृच्छति चन्द्रगः ।
तदासौ म्रियते रोगी यदि त्राता सुरेश्वरः ॥ ७६४ ॥
यस्मिन्नङ्गे चरेद् वायुस्तत्रस्थो यदि पृच्छति ।
पीडितोऽपि तदा रोगै रोगी जीवत्यसंशयम् ॥ ७६५ ॥
वहन्तीं नासिकां वामां दक्षिणां चाभिसंस्थितः ।

यदि पृच्छेत् तदा पुत्रो रिक्तायां तु सुता भवेत् ॥ ७६६ ॥
पार्थिवे जीवविज्ञानं मूलज्ञानं जलेऽनिले ।
आग्नेये धातुविज्ञानं व्योम्नि शून्यं विनिर्दिशेत् ॥ ७६७ ॥
एवं तं पाठयन्नस्ति मन्त्र्यागाद् वञ्चनामतिः ।
पूर्ववत् कथयामास स पूर्ववदभाषत ॥ ७६८ ॥
अथ चर्मकृति प्राप्ते पूर्ववद् गदिते सति ।
मन्त्री कृष्णमुखो जातो मृतज्येष्ठसुतो यथा ॥ ७६९ ॥
तच्छ्रुत्वा चर्मकारोऽपि निरानन्दो गतस्मयः ।
विप्रस्य कटुकैर्वाक्यैः श्रेष्ठिवन्मानसे भृशम् ॥ ७७० ॥
तारेन्दुर्भट्टवाक्यानि सुधारससमान्यथ ।
आकर्ण्य मुदितस्वान्तः सततं सुमना ययौ ॥ ७७१ ॥
अथ प्रातर्नृपाभ्यर्णमागत्य सह वेश्यया ।
ताराचन्द्रेण सर्वोऽपि स्ववृत्तान्तो निवेदितः ॥ ७७२ ॥
अथ श्रेष्ठी समाहूतो भूमिपालेन कोपिना ।
आगतः सोऽपि साशङ्कं नत्वा भूपमुपाविशत् ॥ ७७३ ॥
रोषरक्तेक्षणः क्ष्मापः साक्षेपं स्मेति भाषते ।
रे! श्रेष्ठिन्नीदृशं कर्म मर्माऽऽविष्कुरुषेऽत्र किम्? ॥ ७७४ ॥
अराजकमिदं राज्यं किं वा न्यायो न विद्यते? ।
येन कार्याण्यनार्याणि क्रियन्ते निजयेच्छया ॥ ७७५ ॥
श्रेष्ठी सधैर्यमूचे च गत्वाभ्यर्णेऽस्य साञ्जसम् ।
संलापपूर्वकं राजन्! निविष्टोऽहं यथाविधि ॥ ७७६ ॥
अनेनोचे सखेऽमीषां भाण्डानां मम विक्रयात् ।
संभाव्यते कश्चिल्लाभस्ततोऽजल्पमधीश्वर!? ॥ ७७७ ॥
त्वदीयपण्यराशीनां विक्रयो भविता न हि ।
ततोऽयमगदद्देव! निर्भाग्योऽहं महामते! ॥ ७७८ ॥
यत् किञ्चिद्रोचते तुभ्यं तद्भाण्डप्रस्थिकं सखे! ।
भृत्वा शीघ्रं ग्रहीष्यामि कुभाण्डान्यखिलान्यपि ॥७७९॥

अङ्गीकृतमनेनाऽपि सत्यंकारो मयार्पितः ।
अत्रार्थे साक्षिणो नाथ! बहवो विहिता मया ॥ ७८० ॥
अथाह भूपतिः श्रेष्ठी न्याययुक्तं वचोऽवदत् ।
अनेन लभ्यमेवैतद् यतस्तिष्ठन्ति साक्षिणः ॥ ७८१ ॥
ताराचन्द्रस्ततः प्राह सस्मितं संमतं मम ।
यद्येष ददते मह्यं प्रस्थमेकं समीहितम् ॥ ७८२ ॥
लोभनन्दी ततः प्राह प्रस्थमेकं मनोगतम् ।
याचस्वेति विवादे हि कालक्षेपः क्षमेत किम्? ॥ ७८३ ॥
ताराचन्द्रोऽप्यभाषिष्ट शृणु मे रुचिरं वचः ।
उत्तरानिलपूतानां खण्डितानामुदूखले ॥ ७८४ ॥
रामाकरगृहीतानां समक्षं नृपपर्षदः ।
प्रदेहि मशकस्याऽस्थ्नां प्रस्थं स्वच्छ[1]! ममाधुना ॥७८५॥
( युग्मम् )
एवं तारेन्दुना प्रोक्ते विलक्षोऽजन्यसौ वणिक् ।
असाध्यं न मतेः किञ्चिज्जलानामिव धीमताम् ॥८७६॥
सचित्रोऽपि समाहूतो नत्वा नृपमुपाविशत् ।
ऊचे नृपतिरेतस्य निषिद्धं किं क्रयाणकम्? ॥७८७॥
सोऽप्यूचे दक्षिणं चक्षुरस्य ग्रहणकेऽस्ति मे ।
स्वर्णलक्षं गृहीत्वाऽसौ तदर्पयतु साम्प्रतम् ॥७८८॥
राज्ञोक्तं शोभनं वक्ति मन्त्ययं नयकोविदः ।
ताराचन्द्रस्ततः प्राह युक्तमुक्तं विपश्चिता ॥७८९॥
राजन्! मे मन्दिरे नूनं सहस्राणि दृशां नृणाम् ।
त्वन्मध्यपतितं नेत्रं न जाने हन्त! निश्चितम् ॥७९०॥
त्वं वामलोचनं मन्त्रिन्! समुद्धृत्य समर्पय ।
येनोपलक्ष्यते पूर्णं विदधामि मनोरथम् ॥७९१॥
विहस्याऽथ नृपोऽवादीद् युक्तियुक्तं वदत्ययम् ।

1 स्वच्छमते!, एवमपि ।

उपलक्ष्य यतः कर्त्ता नेत्रार्पणविधिं ननु ॥७९२॥
अहो ! मतिप्रपञ्चोऽस्य यच्चक्रेऽहं निरुत्तरः ।
विचिन्त्येति स मायावी मौनमाश्रित्य निर्गतः ॥७९३॥
चर्मकारं समाहूतं ताराचन्द्रोऽप्यभाषत ।
कैमर्थ्यक्येन पण्यं मे दीयमानं निषेधसि ? ॥७९४॥
चर्मकृत्तमुवाचेति यावदास्मि न तोषितः ।
त्वया क्रयाणकं नैव तावद् देयं हि कस्यचित् ॥७९५॥
ताराचन्द्रोऽथ न्यगदादिदं चर्मकृतां वर ! ।
अमुष्य रत्नचन्द्रस्य नरेन्द्रस्य सुतोऽजनि ॥ ७९६ ॥
तस्य जन्मनि तुष्टस्त्वं नवेति वद कद्वद ? ।
सोऽप्युवाच सखे ! तुष्टः संजातोऽहं गिरा तव ॥७९७॥
ताराचन्द्रो नरेन्द्रस्य प्रणम्य क्रमपङ्कजम् ।
एतद्ग्रहत्रयीमुक्तो व्यवहारपरोऽजनि ॥ ७९८ ॥
इतश्च नगरे तत्र द्यूतकारो धनाह्वयः ।
क्षुधया पीडितः कामं तारेन्द्रं समुपागमत् ॥ ७९९ ॥
ताराचन्द्र ! क्षुधार्त्तोऽहं देहि मे भोजनं वरम् ।
अन्यथा जीवितव्यद्रुः क्षुद्दवेन विनाश्यते ॥ ८०० ॥
यतः—
क्षुधया परिभूतानां प्राणाः बुद्धिः पराक्रमः ।
एते सर्वे विलीयन्ते कल्पान्तेनेव पर्वताः ॥ ८०१ ॥
क्षुधाक्लीवस्य जीवस्य पञ्च नश्यन्त्यसंशयम् ।
सुवासनेन्द्रियवलं धर्मकृत्यं रतिः स्मृतिः ॥८०२॥
सगौरवं कृतस्नेहं ताराचन्द्रेण भोजितः ।
अन्नदानात्परं दानं न भूतं न भविष्यति ॥ ८०३ ॥
अथ द्यूतरतः सोऽपि लोभनन्दी गृहे निशि ।
पद्माकारमदात् खात्रं किमसाध्यं हि तादृशाम् ?॥८०४॥
ॐ ग्रां ह्रीं नम इत्यादि मन्त्राक्षरपरायणम् ।

वारं वारं ताराचन्द्र इत्याख्यां ग्राहकं स्फुटम् ॥८०५॥
प्रज्वलद्वह्निकुण्डस्य पुरस्थं कृष्णमासुरम् ।
ध्यानमापूरयन्तं च दाहयन्तं तिलादिकम् ॥ ८०६ ॥
करवीरारुणपुष्पैः[1] पूजयन्तं च देवताम् ।
अद्राक्षीदेष निभृतं श्रेष्ठिनं लोभनन्दिनम् ॥ ८०७ ॥
( त्रिभिर्विशेषकम् )
अमुमर्थं गदिष्यामि तारेन्दोः प्राणदायकम् ।
यतो मया गृहे भुक्तमेतस्य स्नेहगौरवात् ॥ ८०८ ॥
तृणमुत्तारितं मूर्ध्ना येन तस्याऽपि तन्यते ।
उपकारः किमेतस्य पुनः सर्वोपकारिणः ॥ ८०९ ॥
ध्यात्वेति विनिवृत्तोऽसौ प्रातस्तारेन्दुमन्दिरम् ।
यावद्गच्छति तावत्स मूकं लोकं विलोकते ॥ ८१० ॥
अथाऽपृच्छत् कथं लोको गतासुरिव दृश्यते ! ।
ततः कश्चिन्नरोऽवोचद् दाहोऽभूद् श्रेष्ठिनस्तनौ ॥८११॥
तल्लोभनन्दिनो नूनं विस्पष्टं दुष्टचेष्टितम् ।
यतोऽभिचारमन्त्राणां माहात्म्यं हि निरर्गलम्॥८१२॥
तत् ज्ञात्वा रत्नचन्द्रस्य नरेन्द्रस्यान्तिके गतः ।
तत् सर्वं कथयामास तदीक्षामास भूपतिः ॥ ८१३ ॥
यथावदुक्तं तत्सर्वं तदागम्याऽधिगम्य च ।
अबन्धयद् श्रेष्ठिगलेऽश्मपिण्डं पापपिण्डवत् ॥८१४॥
तं चिक्षेप महाम्भोधौ दुष्टशिक्षापरो नृपः ।
ताराचन्द्रोऽपि संजज्ञे विहितौषधवत्पटुः ॥ ८१५ ॥
योऽनर्थदण्डमीदृक्षं कुरुते क्रूरधीः स हि ।
लोभनन्दिवदम्भोधौ भवाम्भोधौ निमज्जति ॥८१६॥
प्रणम्याऽथ जिनं राजा राजमानो मुदा भृशम् ।
उवाचाऽनर्थदण्डस्य शुश्रुवे निखिलं वचः ॥ ८१७ ॥

१ रक्तपुष्पप्रसूनैश्चेत्यपि ।

अनर्थदण्डमुज्झन्ति ये नराः शिववादिनः ।
तेषामर्थाः प्रसिद्ध्येयुरनर्थानामिवोज्झनात् ॥ ८१८ ॥
अथ मल्लिः प्रभुः प्राह शिक्षाव्रतचतुष्टयीम् ।
तत्र सामायिकं देशावकाशिकं च पौषधम् ॥८१९ ॥
अतिथेः संविभागश्च शिक्षाव्रतचतुष्टयीम् ।
यः पालयति पुण्यात्मा तस्य सिद्धिरसंशयम् ॥८२०॥
अङ्गिनां समभावो यः सर्वभूतेषु भावतः ।
प्राहुः सामायिकं तज्ज्ञास्तत् शिक्षापदमादिमम् ॥८२१॥
आद्यशिक्षापदस्थस्य श्राद्धस्याऽपि यतेरिव ।
चन्द्रावतंसनृपतेरिव कर्मक्षयो भवेत् ॥ ८२२ ॥
नगरं नाम साकेतं सङ्केतगृहवत् श्रियाम् ।
चन्द्रावतंसकस्तत्र नृपतिः समजायत ॥ ८२३ ॥
हिमवृष्टिं विकुर्वाणः स्तनयित्नुरिवाधिकम् ।
पद्मिनीमानलुण्टाकः शिशिरर्तुरवातरत् ॥ ८२४ ॥
शिशिरे वर्त्तमानेऽस्मिन् माघमासेऽनघाशयः ।
रजन्यामगमद् राजा वासवेश्म गतस्मयः ॥ ८२५ ॥
विधिवद् भावनालीनो राजचिह्नैर्विवर्जितः ।
दण्डकोच्चारसम्पूर्णमादात् सामायिकं व्रतम् ॥८२६॥
प्रज्वलिष्यति दीपोऽसौ यावद् ध्वान्तविलोपकः ।
स्पर्धयेव मया तावत् स्थेयं ध्यानवता सता ॥८२७॥
विचिन्त्येत्थं महीनाथः सामायिकपवित्रितः ।
अतिष्ठत् प्रतिमायां स रौद्रार्त्तध्यानवर्जितः ॥८२८॥
तत् तल्पपालिका ध्वान्तं स्वामिनो मा स्म भूदिति ।
गते प्राग्यामिनीयामे प्रदीपे तैलमाक्षिपत् ॥८२९॥
अचिन्तयन्नृपो मेऽसौ कर्म्मक्षयविधायिनी ।
[1]संधास्यामि निजं भावं प्राक्तनकर्मभेदनम् ॥८३०॥

---

१ संध्यास्यामीत्यपि ।

गते द्वितीये यामेऽथ प्रदीपेऽत्र गृहस्थिते ।
अक्षिपद् जाग्रती तैलं सा शय्यापालिका पुनः ८३१
ततोऽप्यचिन्तयद् राजा रणादौ कष्टमुत्कटम् ।
सोढं मया कियच्चेदं परम्परसुखप्रदम् ? ॥ ८३२ ॥
व्यतीते रजनीयामे तृतीये तल्पपालिका ।
चिक्षेप मल्लिकायां तु तैलं सा भक्तमानिनी ॥८३२॥
पुनर्दध्यौ महीपालः क्षालयिष्याम्यहं निजम् ।
पापं तापविनिर्मुक्तः शरीरे स्ववशे सति ॥ ८३४ ॥
सर्वोऽपि सहते कष्टं प्रायः परवशः पुमान् ।
कर्मक्षयाय तन्नैव, कर्मनिर्मूलनं त्विदम् ॥ ८३५ ॥
श्रमोत्पन्नव्यथाखिन्नः स प्रदीप इवाऽचिरात् ।
विभातायां विभावर्यां निर्वाणाऽभिमुखोऽभवत्॥८३६॥
अतिप्रवृद्धभावोऽसौ विहिताऽऽलोचनादिकः ।
आयुःक्षये विपद्याऽसौ महर्द्धिस्त्रिदशोऽजनि ॥८३७॥
सामायिकव्रतं चक्रे यथाऽनेन महीभुजा ।
तथाऽन्यैरपि कर्तव्यमिदं सर्वसुखप्रदम् ॥ ८३८ ॥
दिग्व्रते योऽवधिश्चक्रे तत्संक्षेपो दिने दिने ।
देशावकाशिकं तत् स्यात् शिक्षाव्रतं द्वितीयकम् ॥८३९॥
देशावकाशिकं यस्तु परिपालयति व्रतम् ।
स सुखी जायते धीमान् धनसेनधनेशवत् ॥८४०॥
तथाहि रत्नखेटाख्ये खेटे रत्नधनाभिधः ।
श्रेष्ठी श्रेष्ठमतिस्तस्य धनसेनसुतोऽजनि ॥ ८४१ ॥
स सर्वदा नीचसेवी स्वभावेन विदूषकः ।
परापवादतन्निष्ठः साधूनामपि दूषकः ॥ ८४२ ॥
अन्येद्युर्विजने श्रेष्ठी प्रेम्णा पुत्रमजूहवत् ।
परापवादं मा वत्स ! कार्षीः कीर्त्तिलताहिमम्॥८४३॥

१ सम्यगिति पर पाठ ।

मूलं परापवादद्रोः कलिः, स्कन्धश्च दुर्वचः ।
धर्मभ्रंशः प्रसूनानि फलं दुर्गतिसंगतिः ॥ ८४४ ॥
नीचसंगाच्चिरं पुत्र ! सुदीर्घा भवसंततिः ।
शृणु चन्द्रयशोवृत्तं वृत्तं नवभवावधि ॥८४५॥
तथाहि भरतक्षेत्रे पुरं ब्रह्मपुराभिधम् ।
ब्रह्मसेनो नृपस्तत्र जयसेनो जिघांसुभिः ॥८४६॥
निःशेषशास्त्रविदुरो विदुरोऽस्य पुरोहितः ।
पुरन्दरयशास्तस्य भार्या शीलधुरन्धरा ॥८४७॥
तयोश्चन्द्रयशाः पुत्री वल्लभा निजजीववत् ।
पैतृके साऽर्हतो धर्मे नाऽकार्षीद् वासनां क्वचित् ॥८४८॥
कलिकाननकन्दलया पैशून्याऽशून्यचित्तया ।
यशोदेववणिक्पत्न्या ब्रह्मसुन्दरीसंज्ञया ॥८४९॥
गृद्धया कामभोगेषु सदाचारपथद्विषा ।
तस्या अजायत प्रीतिः सख्यं तुल्ये स्मृतं यतः ॥८५०॥
( युग्मम् )
वत्सेऽनया समं सख्यं न श्रेयांसि समाश्रयेत् ।
न तथोद्योतकृद् रत्नं सर्पमूर्ध्नि यथा भिये ॥८५१॥
इत्थं सा प्रतिषिद्धाऽपि पितृभ्यां न निवर्त्तते ।
यद् यन्निवारितं प्रायः तत्तदाऽऽसेवते जनः ॥ ८५२ ॥
अन्येद्युरुन्मनाश्चन्द्रयशाः सख्याऽनयोदिता ।
मूर्खचित्तमिवात्यन्तं किमु शून्येव लक्षसे ? ॥८५३॥
सखि ! प्रियो विरक्तो मे रक्तो मदिरयेव सः ।
प्रकामं मदिरावत्या न मां दृष्ट्वापि वीक्षते ॥८५४॥
अजातनन्दना कालं निर्गमिष्यामि किं सखि !? ।
न पुत्रो न पतिश्चापि केवलं जन्म हार्यते ॥८५५॥
अलं सखि ! विषादेनाऽऽकर्णयौपयिकं वचः ।
नीलीरागनिभं रागं यथा कुर्यात् त्वयि प्रियः ॥८५६॥

अत्राऽस्ति धर्मधीर्नाम पुरः प्रव्राजिका बहिः ।
बहुश्रुता समभावा चाऽस्मिन् कर्मणि कर्मठा ॥८५७॥
अथ द्वाभ्यां तत्र गत्वा पूजयित्वा धनादिभिः ।
पत्युर्वृत्तान्त आख्यातः साऽवादीन्मा विषीदतां ॥८५८॥
ब्रह्मसुन्दर्यथोवाचाऽनुगृहीता त्वयाऽम्बिके ! ।
युक्तं परोपकाराय प्रवर्त्तन्ते भवादृशाः ॥ ८५९ ॥
अथोच्चाटननामोच्चैश्चूर्णं प्रव्राजिका रहः ।
अदाच्च चन्द्रयशसे दुष्टकर्मेव मूर्त्तिमत् ॥ ८६० ॥
तद्योगचूर्णमाहात्म्यात् शिरसि क्षेपणात् पतिः ।
विरक्तो मदिरावत्यां रक्तश्चन्द्रयशस्यभूत् ॥ ८६१ ॥
बद्धं क्लिष्टं तया कर्म महादुःखनिबन्धनम् ।
विपाको यस्य संभावी बहुसंसारकारणम् ॥ ८६२ ॥
कालक्रमेण सा मृत्वा समभूत्पर्वते वशा ।
अप्रिया यूथनाथस्य तत्तत्कर्मविपाकतः ॥ ८६३ ॥
यत्र सा क्रीडति प्रीत्या तत्र एष न गच्छति ।
तां विलोक्य प्रजज्वाल नवेनेव दवेन सः ॥८६४॥
अथ मृत्वा गिरौ तत्र वानरीत्वेन साऽभवत् ।
अनिष्टा पूर्ववत् पत्युः स्वदुष्कृतवशंवदा ॥ ८६५ ॥
अन्येद्युर्यूथनाथेन ताडिता सा बलीमुखी ।
भ्राम्यन्ती शून्यहृत् पुंसा केनचिद् विधृता हठात् ॥८६६॥
अथायःशृङ्खलाबद्धा महादुःखप्रपीडिता ।
मृत्वाऽभूत् कुक्कुटीत्वेन कुत्रचित् कौलिकौकसि ॥ ८६७ ॥
तथापि कुकुटस्याभूदनिष्टा पूर्वजन्मवत् ।
मृत्वा बिडालिकात्वेन जाता तत्रापि पूर्ववत् ॥ ८६८ ॥
अथ मृत्वाऽभवत् पत्नी चाण्डालस्य सदाधियुक् ।
दुर्गन्धा दुर्भगा क्रूरा वामना पामनाऽपि च ॥ ८६९ ॥
ताडयित्वा श्वपाकेन गृहाद् निष्कासिता सती ।

भ्राम्यन्ती कानने घोरे निध्याता साधुपुङ्गवैः ॥ ८७० ॥
पन्था धर्मपरेऽस्माकं दर्श्यतां मुनयोऽवदन् ।
अनया दर्शितः पन्थाः साधवः प्रोचिरेऽथ ताम् ॥ ८७१ ॥
भद्रे ! भद्रङ्करो धर्मः कार्यः स्वस्य हितेच्छया ।
साऽवदत्कीदृशो धर्मोऽकथयंस्ते यथाविधि ॥ ८७२ ॥
ततः प्रभृति सा शुद्धं कुर्वाणा धर्ममार्हतम् ।
तत्कर्मदोपशेपांऽशात् सुताऽभूत् श्वेतवीपतेः ॥ ८७३ ॥
कोशलस्वामिना साकं कृतोद्वाहेयमप्यभूत् ।
तद्रूपं यक्षिणी काचिद् विकृत्याऽन्तःपुरेऽगमत् ॥ ८७४ ॥
तद् वृत्तं श्वेतवीनाथपुत्री ज्ञात्वाऽतिदुःखिता ।
प्रवर्तिनी समीपेऽगाद् नत्वाऽविक्षद् यथासनम् ॥ ८७५ ॥
ज्ञानादुक्तवती प्रव्राजिकाचूर्णादि सा सती ।
ततोऽस्या गलितं मोहध्वान्तं वोधिरदीप्यत ॥ ८७६ ॥
जातिस्मरणमुत्पेदे संवेगः प्रासरद् हृदि ।
कियद्भगवति ! क्लिष्टं मम कर्माऽस्ति साम्प्रतम् ॥ ८७७ ॥
ऊचे प्रवर्तिनी वत्सेऽहोरात्रमिति कर्म ते ।
अथाऽख्यदेपा मे प्राणनाथो ज्ञास्यति मां कथम् ? ॥८७८॥
इदानीं जातशङ्कस्ते प्रियो निशि कथञ्चन ।
प्रतिमां तीर्थनाथस्य समीपस्थां करिष्यति ॥ ८७९ ॥
तां दृष्ट्वा यक्षिणी दूरादपयास्यति दस्युवत् ।
जिनार्चायाः पुरो यस्मान्न दुष्टाः स्थातुमीश्वराः ॥ ८८० ॥
प्रवर्त्तिनि ! न सा पत्युस्तद् विधास्यति खण्डनम् ।
साऽख्यत् शुभाशये ! नैव किंचित् कर्त्ता शुभोदयात् ॥८८१॥
ततः प्रभृति ते भर्त्ता कर्त्ता त्वां प्राणवल्लभाम् ।
सर्व्वथा पूर्व्वसंभूतः क्षिप्तः कर्म्मभवो यतः ॥ ८८२ ॥
प्रवर्त्तिन्यर्हतो धर्म्मे तत्त्वं किमपि यन्मतम् ।

१ यथातथमेपोऽपि पाठ ।

तद् ब्रूहि करुणां कृत्वा यतस्त्वं करुणानिधिः ॥ ८८३ ॥
प्रधानं सर्व्वमन्त्रेषु भीतानां वज्रपञ्जरम् ।
साधकं मुक्तिमार्गस्य दीपकं ज्ञानसम्पदाम् ॥ ८८४ ॥
जीववत् शाश्वतं साऽथ नमस्कारं यथाविधि ।
अशिक्षयत्प्रियां राज्ञः सा सम्यक् प्रत्यपद्यत ॥ ८८५ ॥
तत्रस्थैव नमस्कारतत्परा नृपवल्लभा ।
सकलां गमयामास क्षणवत्क्षणदां मुदा ॥ ८८६ ॥
ततस्तस्याः पतिर्वृत्तं यक्षिण्या अवगम्य च ।
तमुपाश्रयमागत्य देव्या अनुनयं व्यधात् ॥ ८८७ ॥
आर्यपुत्र ! न ते किञ्चित् कुप्यामः, कर्मणे भृशम् ।
निमित्तमात्रं सर्वोऽप्यपराधगुणयोरपि ॥ ८८८ ॥
अथोवाच नृपो देवि ! कर्मणे कुप्यसि[1] कथम् ? ।
साऽऽचख्यौ मूलतो वृत्तं प्रवर्त्तिन्या निवेदितम् ॥८८९॥
निशम्योचे नृपः प्राच्यकर्मणां फलमीदृशम् ।
अनुभूतमनुस्यूतमिव पत्न्या भवे भवे ॥ ८९० ॥
ततः प्रवर्तिनीं नत्वा धामाऽगात्सप्रियो नृपः ।
साऽपि द्वादशधा धर्मं परिपाल्य दिवं ययौ ॥ ८९१ ॥
एतच्चन्द्रयशोवृत्तं श्रुत्वा पुत्र ! पवित्रधीः ।
नीचसंगं विमुञ्चाऽऽशु चेदिच्छसि समुन्नतिम् ॥ ८९२ ॥
नत्वा तातमसौ प्राह नीचसंगात् समन्ततः ।
निवृत्तोऽहं प्रवृत्तस्तु तवाऽध्वनि शुभाशयम् ॥ ८९३ ॥
अहं ताताऽर्हतं धर्मं श्रोतुमिच्छामि साम्प्रतम् ।
ततोऽसौ कथयामास श्रावकव्रतपद्धतिम् ॥ ८९४ ॥
उपादत्ताऽर्हतो धर्मं सद्गुरोरिव[2] भाविकम् ।
विशेषाच्च मनश्चक्रे व्रते देशावकाशिके ॥ ८९५ ॥
अन्येद्युर्जनकादेशात् पण्यान्तरजिघृक्षया ।

१ किमु कुप्यसीत्यपि । २ स गुरो सद्गुरोरिव, एवमपि ।

चलितः पूर्णगोणीकैः वृषैः पञ्चशतैर्युतः ॥ ८९६ ॥
कण्ठबद्धस्फुरद्धण्टानिर्घोषाः प्रासरंस्तराम् ।
देशान्तरश्रियामाकारणदूता इवोद्भटाः ॥ ८९७ ॥
वङ्गाऽङ्गयोरन्तराले सार्थस्तस्योषितोऽखिलः ।
मिमिलुरपरे सार्थे सार्था वार्धावित्रापगाः ॥ ८९८ ॥
धनसेनोऽथ शर्वर्यां कृतार्चस्त्रिजगद्गुरोः ।
आ सार्थाद् विदधे देशावकाशिकं व्रतं मुदा ॥ ८९९ ॥
इतश्च निशि कोऽप्येत्य जगाद वणिजां पतिम् ।
देव ! नाहलसंघाताश्चेलुः सार्थजिघृक्षया ॥ ९०० ॥
इदं वृत्तं परेषां स वैदेहानां जगाद तु ।
तेऽप्यूचुस्तर्हि वेगेन नश्यतां धनसेन ! भोः ! ॥ ९०१ ॥
न्यगदद् धनसेनोऽथ व्यूहं कृत्वाऽत्र तिष्ठत ।
नाहलानीकिनीसंघाः किं करिष्यन्ति जाग्रताम् ? ॥९०२॥
यष्टिभिर्मुष्टिभिश्चापैः प्रस्तरैर्गोलिकादिभिः ।
व्यूहभेदं विधास्यन्ति धनसेनेति चिन्तय ॥ ९०३ ॥
अथाऽभ्यधाद् धनसेनो मया स्थातव्यमत्र यत् ।
आ सार्थात्परतो यस्मान्निषेधो गमने निशि ॥ ९०४ ॥
अहो ! ते मूर्खता भद्रावादीद् यन्नियमो मम ।
स्वस्थावस्थासु कर्त्तव्यं व्रतस्य परिपालनम् ॥ ९०५ ॥
भद्र ! धर्मप्रभावात्ते भूयाद् रक्षा निशान्तरे ।
वयं तु सधना यामो नश्यतां नास्ति भीः क्वचित् ॥९०६॥
वैदेहा अपरे सार्थमादाय रजनीमुखे ।
भीत्या मृगा इवाऽनश्यन्नास्ति मृत्युसमं भयम् ॥ ९०७ ॥
तेषां प्रणश्यतामर्द्धमार्गे भिल्ला उदायुधाः ।
आययुः संमुखं मूर्त्ताः कालरात्रिसुता इव ॥ ९०८ ॥
अथ तैर्वेष्टितः सार्थः शरीरीवोग्रकर्मभिः ।
गृहीतसारश्च कृतः प्रहतः प्रस्तरादिभिः ॥ ९०९ ॥

अथ प्राणान् समादाय नेशुः सार्थजना निशि ।
धनसेनस्तु कुशली तत्रस्थो व्रतपालनात् ॥ ९१० ॥
अवबुद्ध्य स्वरूपं तत् प्रनष्टा गतपौरुषात् ।
विशेषतो रतो जैने धर्मेऽभूत् सुसमाहितः ॥ ९११ ॥
अथ प्राप्य स्वकीयं तत् पुरं रत्नपुराभिधम् ।
समुपार्जितलक्ष्मीकः श्राद्धव्रतमपालयत् ॥ ९१२ ॥
पर्यन्तेऽनशनं कृत्वा समाधिध्यानतत्परः ।
मृत्वाऽभूत् प्रथमे कल्पे सुरो ललितसंज्ञकः ॥ ९१३ ॥
देशावकाशिकं शुद्धं यथाऽनेन सुरक्षितम् ।
तथाऽन्यैरपि भूपाल ! पालनीयं विवेकिना ॥ ९१४ ॥
श्रीकुम्भो न्यगदद् नाथ ! धनसेनः कृतार्थधीः ।
यस्येदृक्षं मनो धर्मे सुस्थितं परमार्थतः ॥ ९१५ ॥
वरं पुरं शरीरं च द्रविणं च त्यजन्त्यपि ।
त्यजन्त्यभिग्रहं नैव जीवितव्यव्ययेऽपि हि ॥ ९१६ ॥
पौषधव्रतदृष्टान्तं स्वामिन् ! श्रोतुं समुत्सुकः ।
केषां तृप्यन्ति चेतांसि यौष्माकीणवचःश्रुतौ ? ॥ ९१७ ॥
अथाऽभ्यधाद् जिनो मल्लिः संदेहध्वान्तभास्करः ।
माकन्दफलसप्रीत्या गिरा तत्त्वकिरा भृशम् ॥ ९१८ ॥
पौषं दत्ते क्रमाद् ध्यानधर्मस्य शुभदायिनः ।
इति निष्पत्तितः प्राहुस्तत्त्वज्ञाः पौषधव्रतम् ॥ ९१९ ॥
केचित् पौषधतन्निष्ठा मृत्युदा अपि वेदनाः ।
सहन्तेऽन्यत्वभावेन राजन् ! शिखरसेनवत् ॥ ९२० ॥
तथाहि मिथिलापुर्यां विजयी विनयी नयी ।
राजा विजयधर्माख्यश्चन्द्रधर्माऽस्य वल्लभा ॥ ९२१ ॥
अन्येद्युरनवद्याङ्गी खेलन्ती सममालिभिः ।
विशिष्टलक्षणाधारा स्त्रीरत्नमिति कश्चन ॥ ९२२ ॥
व्यामोह्य विद्यया लोकान् विद्यासाधनहेतवे ।

जज्ञेऽन्तःपुरमासीनां चन्द्रधर्मा निशामुखे ॥९२३॥ (युग्मम्)
अस्या अपहृतिं ज्ञात्वा निधेरिव धराधवः ।
मूलच्छिन्नांह्रिप इव पपात पृथिवीतले ॥ ९२४ ॥
चन्दनद्रवनिष्यन्दितालवृन्तमहानिलैः ।
चिरं कृतप्रतीकारो मूर्च्छाविच्छेदमाप सः ॥ ९२५ ॥
हा ! प्रिये ! हा ! प्रिये ! राकाशशाङ्कवदनानघे ! ।
कुतोऽस्मान् त्वमनापृच्छय गताऽसि मृगलोचने ! ॥९२६॥
त्वां विना नगरं देवि ! शून्यमेतद् विलोक्यते ।
त्वदनु प्रस्थिताः प्राणाः शून्यमस्थात् कलेवरम् ॥९२७॥
एवं दुःखपरे राज्ञि चतुर्थे दिवसे दिवः ।
जटाजूटधरो मन्त्रसिद्धः कश्चिदुपागतः ॥ ९२८ ॥
वयस्य ! मन्त्रसिद्ध्यर्थं तव कान्ता मया हृता ।
एष कल्पो यतोऽमुष्याऽऽराधने गुरुणोदितः ॥ ९२९ ॥
तां जामिमिव मे विद्धि न ते पीडा भविष्यति ।
षण्मासान्ते त्वया सार्कं संगमः साधु सेत्स्यति ॥९३०॥
इत्युदित्वा गते तस्मिन् पुनः मूर्च्छामवाप सः ।
आर्द्रीभूतं च तद् दुःखं पिटको घर्षणादिव ॥ ९३१ ॥
मूर्च्छान्ते प्रेयसीं स्मृत्वा ध्यानी मौनी च सोऽभवत् ।
पल्योपमोपमास्तस्य बभूवुर्दिवसाः कति ॥ ९३२ ॥
व्यामोहतिमिरे तस्य दूरीभूते कथञ्चन ।
जहृषुः सचिवाः सर्वे लब्धाऽपूर्वनिधानवत् ॥ ९३३ ॥
अत्रान्तरे समागत्योद्यानपालोऽप्यभाषत ।
विजयस्व महीपाल ! मङ्गलैरतुलैर्भृशम् ॥ ९३४ ॥
तवोद्याने जिनस्वामी गजगामी समागतः ।
अनेकसंशयध्वान्तध्वंसकस्तिग्मभानुवत् ॥ ९३५ ॥
श्रुत्वेदं हर्षरोचिष्णुर्द्राग् पारितोषिकं नृपः ।
दत्त्वा व्यसृजदेनं तु स्वयमागाच्च वन्दितुम् ॥ ९३६ ॥

प्राकारत्रितयं दृष्ट्वा भ्राजमानं जिनेशितुः ।
धाराकदम्बवद् धाराहतो रोमाञ्चितोऽभवत् ॥९३७॥
ततः प्रदक्षिणीकृत्य तीर्थनाथं क्षमापतिः ।
स्तुत्वा स्तोत्रैर्विचित्रैश्च यथास्थानमुपाविशत् ॥ ९३८ ॥
अनादिनिधनो जीवो बद्धः कर्मभिरुद्भटैः ।
दुर्वातभ्रामितः पोत इवाम्भोधौ भ्रमत्यलम् ॥९३९॥
तत्रैव भ्राम्यतो द्वीपकल्पः कल्पद्रुमोपमः ।
जैनो धर्मः स च द्वेधा साधुश्राद्धविभेदतः ॥९४०॥
साधुधर्मो यथा प्रोक्तो व्रतपञ्चकबन्धुरः ।
अदवीयानयं मार्गो लोकाग्रमुपतिष्ठते ॥९४१॥
श्राद्धधर्मात् परं मोक्षो भवति द्वित्रिजन्मतः ।
अयं तु सुकरो ज्ञेयः प्रायशो विषयैषिणाम् ॥ ९४२ ॥
कस्य धर्मस्य माहात्म्यादभूवं पृथिवीश्वरः ।
इत्युक्ते भूभुजा तेन प्रोचे वाचंयमाग्रणीः ॥९४३॥
आसीदिहैव भरते विन्ध्यसंज्ञो महीधरः ।
चतुर्विधगजोत्पत्तिभूमिर्भूमितिदण्डवत् ॥९४४॥
तस्मिन् शिबिरसेनोऽभूत् पल्लीशः क्षत्रियाग्रणीः ।
जन्तुजातवधे निष्ठो गरिष्ठः स्तेयसाहसः ॥९४५॥
इयं ते प्रेयसी प्रेमरत्नरोहणभूमिका ।
समभूत् श्रीमती नाम्ना पल्लिश्रीरिव गेहिनी ॥९४६॥
गुञ्जामुक्ताफलाहारा वल्कलाम्बरधारिणी ।
बर्हिपिच्छकृतोत्तंसा प्रियङ्गुद्युतिभासुरा ॥९४७॥
त्वया सह सदुर्गाद्रिनिकुञ्जे कृतचङ्क्रमा ।
पिबन्ती नैर्झरं वारि त्रासयन्ती मृगीरपि ॥९४८॥
यूथभ्रष्टमिव न्यङ्कुं सार्थच्युतमिवाध्वगम् ।
एकं ददर्श सा साधुं पर्यटन्तं महागिरौ ॥ ९४९ ॥
( त्रिभिर्विशेषकम् )

अथोवाच भवान् साधो! कस्माद् भ्राम्यन्निहाऽऽगतः ।
सोऽप्याख्यन्निजकाद् गच्छाद् भ्रष्टोऽहं दिवसात्यये॥९५०॥
नाऽहं किञ्चिद् क्वचिद् वेद्मि दिग्मूढ इव साम्प्रतम् ।
दर्शयतु भवान् मार्गं श्रेयस्ते भावि भाविकः ॥९५१॥
अथैष स्वगृहे नीत्वा स्थापयित्वा वराश्रये ।
वस्त्रान्नपानशय्याभिर्भवद्भ्यां प्रतिलाभितः[1] ॥९५२॥
शृण्वतोरार्हतं धर्मं दम्पत्योर्वासनाऽभवत् ।
अशिक्षेतां भवन्तौ चाऽऽवश्यकादिविधिं पुनः ॥९५३॥
चतुष्पर्व्यां ग्रहीष्यामि पौषधं पातकौषधम् ।
एवं निश्चयमाधत्त भवान् भवविरागधीः ॥९५४॥
अन्येद्युः शिखरसेनोऽमावास्यां[2] शुद्धवासनः[3] ।
अगृह्णात् पौषधं तद्वत् श्रीमत्यपि शुभाशया ॥९५५॥
पुच्छेनाऽऽच्छोटयन् पृथ्वीं नादैर्मुखरयन् दिशः ।
कोपाग्नेरर्चिषा रज्यल्लोचनद्वयदीपिकः ॥९५६॥
मूर्तो रौद्रो रसः प्रेताधिपतेः प्रतिहस्तकः ।
इतश्चाऽगाद् निशीथिन्यां पारीन्द्रः पौषधालये ॥९५७॥
( युग्मम् )
तं दृष्ट्वा धन्व धन्वेति भाषमाणं मुहुर्मुहुः ।
भवन्तं वीक्ष्य त्वत्पत्नी प्रोचे वाचं मिताक्षरम् ॥९५८॥
नाथ! सन्यस्तशस्त्रस्य पौषधव्रतशालिनः ।
जन्तोर्घातं न दातुं ते युज्यते जैनसाधुवत् ॥ ९६९ ॥
सहस्वोपसर्गममुं कर्म्मेन्धनहुताशनम् ।
येन ते शिवशर्माणि भावीनि करगोचरे ॥ ९६० ॥
श्रुत्वैवं वचनं चारुगुरुवाक्यमिवापरम् ।
भवान् क्षान्तिवरागारे स्थितः साम्यमहाधनः ॥९६१॥

---

१ प्रतिलाभ्यते, इत्यपि । २ अमावासीशब्दस्य सप्तम्यन्तमेतत् । ३-मानस , एवमपि ।

ततः सिंहेन दुःसह्यं भवान् शिरसि ताडितः ।
अनित्यतादिभावज्ञ इत्याशु ध्यानवान् भवान् ॥९६२॥
रे! जीव! किमिदं कष्टं यत्सोढा नरकोदरे ।
तदिदं वर्णिकामात्रं दर्श्यते तेन साम्प्रतम् ॥९६३॥
रे! जीव! शतशः प्राणत्यागस्तेऽजनि संसृतौ ।
पाण्डित्यमरणं नैव प्राप्तं कर्म्मद्रुपावकम् ॥९६४॥
स्मरन्निति भवान् मृत्वा भूत्वा नाकी[1] च लान्तके ।
त्वमभूः पृथिवीपालस्तद्वदेपाऽपि ते प्रिया ॥९६५॥
तत्पूर्व्वं पशवो भद्र! निरागसो वियोजिताः ।
तद्विपाकं विरहेण सहसे दुःसहं चिरम् ॥ ९६६ ॥
श्रुत्वेति तीर्थकृत्प्रोक्तं लघुकर्म्मा महीपतिः ।
राज्ये पुरन्दरपुत्रं न्यस्याऽभूत् श्रमणोत्तमः ॥९६७॥
ततस्तीर्थकरोपान्ते तपस्तप्त्वा सुदुष्करम् ।
अन्तकृत्केवलीभूय राजर्षिः प्राप निर्वृतिम् ॥ ९६८ ॥
तेन विद्याभृता नीता तत्र सा वल्लभेशितुः ।
श्रुत्वा तीर्थकरप्रोक्तं प्रव्रज्याऽथ शिवं ययौ ॥९६९॥
अथ नत्वाऽवदत् कुम्भपृथ्वीशः प्राज्यविक्रमः ।
स्वामिन्! पोषधदृष्टान्तो जातः कर्णावतंसताम् ॥९७०॥
कृतार्थः शिखरसेनः पौषधव्रततत्परः ।
येन प्राणात्ययेऽप्युच्चैः पालितं पौषधव्रतम् ॥ ९७१ ॥
इदानीं श्रोतुमिच्छामि तुर्यं शिक्षाव्रतं प्रभो! ।
श्राद्धधर्मो भवेद् येन समग्रोऽथाह तीर्थकृत् ॥ ९७२ ॥
तुर्यं शिक्षाव्रतं प्राहुरतिथेः संविभागतः ।
प्राप्ताय साधवे काले दानात् प्राशुकवस्तुनः ॥ ९७३ ॥
अतिथेः संविभागः स्यादेतद्व्रतनिषेवणात् ।
भाविनी चन्दना वीरतीर्थे निर्वाणगामिनी ॥ ९७४ ॥

1 स्वर्गी, इतीनरदपि ।

तथाहि—

इक्ष्वाकुवंशसिद्धार्थनन्दनः पावनाकृतिः ।
सुवर्णवर्णरुचिरः सिंहाङ्कः सिंहविक्रमः ॥ १७५ ॥
गृहीतचारुचारित्रश्छद्मस्थः छद्मवर्जितः ।
विहरन्नगरीं प्राप कौशम्बीं चरमो जिनः ॥ १७६ ॥
(युग्मम्)

तत्र राजा शतानीकः शतानीकजिताहितः ।
सुता चेटकराजस्य तस्य देवी मृगावती ॥ १७७ ॥
सुगुप्तः सचिवस्तस्य नन्दाख्या तस्य गेहिनी ।
सुवयस्या मृगावत्याः परमप्रीतिभूरभूत् ॥ १७८ ॥
श्रेष्ठी धनावहस्तत्र धनैर्धनदसन्निभः ।
मूलाख्या प्रेयसी तस्य गृहकर्म्मधुरन्धरा ॥ १७९ ॥
अत्रार्हन् पौषमासस्य श्यामले प्रतिपद्दिने ।
जग्राहाऽभिग्रहममुं दुर्ग्राह्यमितरैर्जनैः ॥ १८० ॥
मुण्डिता लोहनिगडबद्धपादा तपःपरा ।
रुदती सुदती किंचिन् मन्युना राजपुत्रिका ॥ १८१ ॥
प्रेष्यभावं गता काचिद् देहल्यन्तस्थितक्रमा ।
बहिःक्षिप्ताऽपरपदा भिक्षुकेषु गतेष्वपि ॥ १८२ ॥
कुल्माषान् सूर्पकोणेन यदि मह्यं प्रदास्यति ।
तदैवाऽहं विधास्यामि पारणामन्यथा न तु ॥१८३॥
नीचोच्चेषु गृहेषूच्चैर्गोचराऽध्वानमागतः ।
अलक्ष्याभिग्रहो वीरः पर्यभ्राम्यत् दिने दिने ॥१८४॥
दीयमानां मुहुर्भिक्षामगृह्णति जिनेश्वरे ।
अभिग्रहवशेनाऽथ पौराः खेदमुपागमन् ॥१८५॥
अर्हन्ननात्तभिक्षोऽसौ सहमानः परीषहान् ।
अनयंश्चतुरो मासान् दिवसानिव निर्ममः ॥१८६॥
अन्येद्युश्चरमस्वामी सुगुप्तौकसि भिक्षया ।

प्रविशन्नक्षि तत्पत्न्या सुमेरुरिव जङ्गमः ॥९८७॥
नन्दयाऽऽनन्दसंपूर्णं वस्तुकल्पमढौकयत ।
धन्या धन्येति भाषिण्या यद् वीरो गृहमागतः ॥९८८॥
अनुकूलमभूत् दैवं सत्यार्था आशिषोऽपि च ।
उज्जृम्भितं मुहुः पुण्यं तुष्टा मे कुलदेवता ॥९८९॥
एवं मनसि विभ्रत्यामभिग्रहवशाद् जिनः ।
अनात्तभिक्षस्तद्गेहाद् निर्ययौ गजलीलया ॥९९०॥
अधन्या मन्दभाग्याऽहमसंपूर्णमनोरथा ।
यथागतः तथागच्छत्येष चिन्तामणिः श्रिया ॥९९१॥
एवं खेदपरां नन्दां दास्यूचेऽयं दिने दिने ।
आयाति याति च स्वामी तद्धेतुरवगम्यताम् ॥९९२॥
इत्थमाकर्ण्य नन्दाऽपि सखेदा पत्युरग्रतः ।
वीरस्याऽनात्तभिक्षत्वं कथयामासुषी तदा ॥ ९९३ ॥
परचित्तोपलक्षिण्या किं कार्यं भवतां धिया ? ।
यदसौ जगतां नाथो गृहमायाति याति च ॥ ९९४ ॥
जानात्वभिग्रहं प्रेयान् दुर्लक्षे धीप्रयोगतः ।
सर्वज्ञेनेव कार्याणि ज्ञायन्ते भवता धिया ॥ ९९५ ॥
अभुक्ते सुगुरौ[1] नाथ ! भुज्यते किं विवेकिभिः ? ।
अन्यथा पशुवज्जन्म वयं मन्यामहे निजम् ॥ ९९६ ॥
ततो मन्त्री जगादेवं तीर्थेशितुरभिग्रहम् ।
यथातथा करिष्यामि पूर्णं प्रातः मृगेक्षणे ! ॥ ९९७ ॥
विजयाख्या प्रतीहारी मृगावत्यास्तदागता ।
तयोरालापमाकर्ण्य गत्वा देव्या उवाच च ॥ ९९८ ॥
मृगावत्यपि तत्कालं विदधे खेदमुच्चकैः ।
जिनशासनभक्तानां किमिदं किल कौतुकम् ॥ ९९९ ॥
संभ्रान्तस्तां शतानीकोऽपृच्छत् खेदनिबन्धनम् ।

१ भुवननाथे, इत्यपरम् ।

तस्याः हृदयवासिन्याः संक्रान्तं हृदयादिव ॥१०००॥
उच्चकैः खेदसंच्छन्ना मन्दध्वाना मृगावती ।
व्याजहार नृपस्याऽग्रे दीनं दीनं महासती ॥ १००१ ॥
चराचरं चरैर्विश्वं जानते जगतीभुजः ।
स्वपुरीमपि नैव त्वमहो ! ते मतिकौशलम् ॥ १००२ ॥
त्रैलोक्याधिपतिं वीरं वसन्तं नात्र वेत्सि किम् ? ।
अथवा राज्यलुब्धा हि गुरुपूजाप्रमद्वराः ॥ १००३ ॥
राजा वभापे धिग् धिग् मां यदसौ परमेश्वरः ? ।
अलक्ष्याभिग्रहोऽप्युच्चैः संपूर्णाभिग्रहो न यत् ॥ १००४ ॥
साधु साधु प्रिये ! वीराभिग्रहं प्रेरितः प्रति ।
मन्त्री मन्त्रं गुरुस्त्वं मे यदस्यैवं प्रमादहृत् ॥ १००५ ॥
प्रभाते प्रेयसि ! ज्ञात्वाऽभिग्रहं चरमेशितुः ।
पारणां कारयिष्यामि शरीरग्लानिहारिणीम् ॥१००६॥
राजा सचिवमाहूय वीरवृत्तं यथातथम् ।
सविस्तरमुवाचाऽर्हद्भक्तिकञ्चुकचञ्चुरः ॥ १००७ ॥
धिग् धिग् नश्चतुरो मासान् वसंस्तपसि तत्परः ।
प्रभुर्नो वन्दितो नैव ज्ञातोऽपि ज्ञाननन्दनः ॥ १००८ ॥
विज्ञेयोऽभिग्रहो भर्तुः कथंचिदपि धीधन ! ।
पारणं कारणीयश्च नान्यथा श्राद्धताऽपि का ? ॥१००९॥
सचिवोऽप्यब्रवीद् देव ! वहवोऽभिग्रहाः श्रुताः ।
तथ्यवाद्यभिधो वक्तोपाध्यायः सर्वशास्त्रवित् ॥ १०१० ॥
भूपोऽप्यथ समाहूयाऽध्यापकं तथ्यवादिनम् ।
वीरस्याभिग्रहं चारु विचारय यथामति ॥ १०११ ॥
अर्थ्यन्ते सर्वधर्माणामाचारास्तव शासने ।
तन्मध्यात् केनचिद् भर्त्ता विधाता पारणाविधिम्॥१०१२॥
अध्यापकोऽप्यभाषिष्ट भूयांसोऽभिग्रहाः खलु ।
द्रव्यक्षेत्रकालभावभेदात् संयमिनां मताः ॥ १०१३ ॥

ते चामी–
महर्षिः कोऽपि कुन्तेन प्रोतैः संख्यातमण्डकैः ।
सादिना दीयमानैश्च विधत्ते पारणाविधिम् ॥ १०१४ ॥
कश्चिद् बालादिहस्तेन प्राशुकं चणकादिकम् ।
गृह्णाति पारणाकालेऽभिग्रहा विविधाः किल ॥१०१५॥
आलानस्तम्भमुन्मूल्य पट्टहस्ती मदान्धलः ।
गत्वा कान्दविकाट्टानि करेणाऽऽदाय मण्डकान् ॥१०१६॥
मह्यं ददाति चेत् काले तदा स्यात् पारणाविधिः ।
इत्याद्यभिग्रहा राजन्! पूर्यन्ते देवतावशात् ॥१०१७॥
( युग्मम् )
विशिष्टज्ञानमाहात्म्यं विनाऽस्याऽभिग्रहः कथम् ।
मादृशैर्गदितुं शक्यः, सर्वं हि महतां महत्? ॥१०१८॥
ईदृशोऽभिग्रहान् राजा पुर्यामाघोष्य डिण्डिमात् ।
बहुधाऽध्यापकेनोक्तान् कारयामास कार्यवित् ॥१०१९॥
केचित् नृपाज्ञया चक्रुः केचिद् भक्त्या जिनं प्रति ।
रत्नवृष्टीच्छया केचित् केचित् कीर्तिजिघृक्षया ॥१०२०॥
केचित् कुल्याशया स्पष्टं व्यधुरेवंविधं जनाः ।
तथापि तीर्थकृद् भिक्षां न जग्राह कथञ्चन ॥१०२१॥
प्रम्लानवदनच्छाया रजनीनीरजोपमाः ।
व्रीडां खेदाकुलाः पौरा विदधुर्मुषिता इव ॥१०२२॥
इतश्च–
अस्त्रैश्चतुर्विधैः शान्तैः कङ्कटैर्गजवाजिभिः ।
पूरयित्वा गणं नावां पूर्ववैरेण दूरतः ॥१०२३॥
नद्याः पथा शतानीको विक्रमादेकया निशा ।
एत्याऽरुधत् पुरीं चम्पां तित्तिरीमिव पाशकः ॥१०२४॥
ज्ञात्वा तदागमं झम्पापातवद् भयविद्रुतः ।
चम्पाधिपः पलायिष्ट दस्युवद् दधिवाहनः ॥१०२५॥

यो यद् वस्तु समादत्ते तत् तस्येत्याऽऽदिशद् नृपः ।
मुमुषुः तद्भटाश्चम्पां निर्वीरांवेश्मवद् भृशम् ॥१०२६॥
दधिवाहनभूभर्तुर्धारिणीमङ्कहारिणीम् ।
श्रिया भूमीचरीं देवीमिव देवीमवीतधीः ॥१०२७॥
वसुमत्या समं पुत्र्या राजलक्ष्म्येव मूर्तया ।
कोऽप्यौष्ट्रिकोऽग्रहीद् राज्यसर्वस्वमिव संचितम् ॥१०२८॥
( युग्मम् )

शतानीकः परानीकैरनीकैः पर्यलङ्कृतः ।
कृतकृत्यः पुरीं प्राप स्वविक्रमकथासखीम् ॥१०२९॥
मोहितस्तेन धारिण्या रूपेणाऽप्रतिमश्रिया ।
जनानां पुरतो गच्छन् जगादेति सुदुःसहम् ॥ १०३० ॥
इमां रूपवतीं प्रौढां भार्यां कर्त्तास्मि निश्चितम् ।
पुर्याश्चतुष्पथे गत्वा विक्रेतास्मि कुमारिकाम् ॥१०३१॥
श्रुत्वेति धारिणी देवी कर्णयोः कटुकं वचः ।
मनस्येवं दधारोच्चैः सिञ्चन्त्यश्रुजलैर्महीम् ॥ १०३२ ॥
महाकुले प्रसूताऽहमिन्दोरपि सुनिर्मले ।
दधिवाहनराजस्य पट्टदेव्यस्मि विश्रुता ॥ १०३३ ॥
विज्ञाततीर्थकृद्धर्म्मा शीलालङ्कारशालिनी ।
उल्लापानीदृशान् दैवाद् विश्रृणोम्यघकारकान् ॥१०३४॥
नाऽद्यापि किमु रे ! जीव ! मत्तेभश्रुतिचञ्चलम् ।
देहं त्यक्त्वा यशोदेहं न रक्षसि सनातनम् ॥१०३५॥
वपुषोऽस्मात् स्वयं गच्छ विलतो मूषको यथा ।
द्विजिह्वस्य प्रवेशे स्याच्छुभंयो[2] ! न शुभं तव ॥१०३६॥
सोक्ता तद्भर्त्सनोद्युक्तैरिव प्राणैर्विमुच्यते ।
अङ्गुलीदर्शनाद् शोषं याति कूष्माण्डकं यतः ॥१०३७॥
नृपपत्नी समालोक्य विपन्नां करभासनः ।

१ निर्वीरा–इत्यपि । २ शुभयुक्त ! इत्यर्थः ।

यद्दृष्टेषाऽभवत् तद्दृष्टेषाऽपि भविता क्षणात् ॥१०३८॥
एवं विचिन्त्य साश्रुनेत्रा भाषमाणः पुरो नयन् ।
राजवर्त्मनि विक्रेतुं दधौ, मूर्ध्नि तृणं ददौ ॥१०३९॥
क सान्तःपुरभूः क्रीडा केयं विक्रयभूमिका ? ।
क मूर्ध्नि मुकुटश्रीश्च क चैतत् तृणमोचनम् ? ॥१०४०॥
अथवा प्राक्कृतानां हि कर्मणां फलमीदृशम् ।
परो निमित्तमात्रं स्याद्, कस्मै कुप्याम्यहं ततः ॥१०४१॥
एवं खेदपरां राजपुत्रीमालोक्य भास्करः ।
पश्चिमामगमत्, सन्तः परदुःखेन दुःखिताः ॥१०४२॥
नभोलक्ष्मीरिमां वीक्ष्य स्थितां विक्रयवर्त्मनि ।
तिमिरच्छद्मना दध्रे कज्जलाश्रुजलश्रियम् ॥१०४३॥
श्रेष्ठी धनावहस्तत्राऽऽगतो दासजिघृक्षया ।
एनां श्रियमिवालोक्य दधाराऽऽनन्दसंपदम् ॥१०४४॥
असौ कन्या न सामान्याऽगाद् दैवादीदृशीं दशाम् ।
संपदो विपदश्चाप्यरघट्टघटिका यतः ॥१०४५॥
इमां क्रयक्षितौ क्षिप्तां वीक्षमाणाङ्गजामिव ।
हृदयं भविता द्वेधा वालुङ्कमिव पक्त्रिमम् ॥१०४६॥
यस्य कस्यापि हीनस्य करे यास्यति रत्नवत् ।
यतश्चतुष्पथे तेन विक्रेतुं विधृता ध्रुवम् ॥१०४७॥
तिष्ठन्त्या मद्गृहस्यान्तः स्यादस्या बन्धुसंगमः ।
मूलद्रव्यं यतो नव्यं सतामुपकृतिर्मता ॥१०४८॥
धनावहो विचिन्त्येति तस्मै दत्त्वेप्सितं धनम् ।
निन्ये वसुमतीं बालां स्ववेश्म विगतस्मयः ॥१०४९॥
पृष्टाऽथ श्रेष्ठिना वत्से ! का त्वं कस्याऽसि नन्दिनी ? ।
किं गोत्रं किमु ते नाम का नाम जननी तव ? ॥१०५०॥
महत्त्वेन कुलस्योच्चैः स्वकुलं वक्तुमक्षमा ।

१ निर्मितमिवस्मयः ।

सा तस्थौ न्यग्मुखी बाला रजन्यामिव पद्मिनी ॥१०५१॥
उवाच श्रेष्ठिनीं मूलामावयोर्दुहिताऽसकौ ।
लालनीया पालनीया नेत्रकैरवकौमुदी ॥१०५२॥
तया श्रेष्ठिगिराऽत्रात्सीत् वत्सा वसुमती सुखम् ।
जङ्गमा कल्पवल्लीव नानाभरणभूषिता ॥१०५३॥
प्रज्ञाविनयवाक्शीलैर्निःशेषैश्चन्दनोपमैः ।
चन्दनेत्यभिधां चक्रे सत्यामस्या धनावहः ॥१०५४॥
आबाल्यविमलैर्वृत्तैर्बाला तारुण्यशालिनी ।
द्वितीयेन्दुवदानन्दं विदधे, पिदधे तमः ॥१०५५॥
स्वभावेन स्वरूपेयं विशेषाद् यौवनश्रिया ।
अश्विनीपूर्णमासीवाऽशुभदिन्द्रमहेन सा ॥१०५६॥
वीक्ष्येमां यौवनोद्यानवशां गजवशामिव ।
विदध्यौ श्रेष्ठिनी मूला चिन्तयन्त्याऽऽयतिं हृदि ॥१०५७॥
श्रेष्ठी संभाषते नित्यं यद्यप्येनां सुतामपि ।
चेद् दैवादुपयच्छेत जीवन्त्यपि मृताऽस्म्यहम् ॥१०५८॥
अथवा—
न सा विद्या न तद् ज्ञानं न तद् ध्यानं न सा कला ।
निवर्त्येत मनो येन स्मरापस्मारघस्मरम् ॥१०५९॥
यदूचे—
बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यति ।
विश्वामित्रोऽपि सोत्कण्ठं कण्ठं जग्राह मेनकाम् ॥१०६०॥
पद्मयोनिः[1] निजां पुत्रीं न प्रियां कृतवान् किमु ? ।
तावत् शूरो भवेत् सर्वो यावद् न स्त्रीकटाक्षितः ॥१०६१॥
परं रामा सुलम्भेन तुच्छत्वेन मुहुर्मुहुः ।
कालं निनाय ताम्यन्ती शाकिनीव दुराशया ॥१०६२॥
इतश्च प्रासरद् ग्रीष्मो भ्राष्ट्रमिन्धनविद्युतिः ।

---

1 पद्मजन्मेत्यपि ।

नखंपचरजालोकदृगायुःकर्मनाशनः ॥१०६३॥
सर्वत्र क्षिप्तकारीषपावकौपम्यमध्वसु ।
वहमानेषूल्कानां झलत्कारेषु सर्वतः ॥१०६४॥
श्रेष्ठी धनावहो गेहमासाद्य चिरपान्थवत् ।
हा हेति मन्त्रमुच्चार्य निविष्टो दृष्टविष्टरे ॥१०६५॥
तदंह्रिक्षालकः कोऽपि नासीद् दासीमुखो जनः ।
विनयाच्चन्दनोत्थाय निषिद्धा श्रेष्ठिनाऽपि हि ॥१०६६॥
पादौ क्षालयितुं भक्त्या प्रावर्त्तिष्ट विशिष्टधीः ।
भवेत् कुलप्रसूतानां विनयो मण्डनं यतः ॥१०६७॥
सुभगः केशपाशोऽस्या निपतन् पङ्किलक्षितौ ।
लक्ष्यते स्म मुखैणाङ्कभयात्तम इव व्रजन् ॥१०६८॥
मा भूदेतर्हि वत्सायाः पङ्किलः कचसंचयः ।
इति यष्ट्या दधारोच्चैः पितृवत् प्रेमलालसः ॥१०६९॥
एतच्च श्रेष्ठिनी दूरजालकान्तरवर्त्तिनी ।
विलोक्य ध्यातवत्येवं तत्सत्यं चिन्तितं च यत् ॥१०७०॥
पत्नीत्वसत्यङ्कारोऽस्याः केशपाशनियन्त्रणम् ।
पितुः क्रियेदृशी नैव, दुर्जया भवितव्यता ॥१०७१॥
उच्छेद्या तदियं मूलाद् गरवल्लीव जङ्गमा ।
इति निश्चयमाधाय मौनं मूला चकार सा ॥१०७२॥
जगाम विपणिं श्रेष्ठी मूलाऽप्याऽऽहूय नापितम् ।
रोगार्त्ताया इवाऽमुष्याः केशपाशमनाशयत् ॥१०७३॥
ददौ च पादयोः कामं निगडानि दृढान्यपि ।
चन्दनां ताडयामास स्वकरैः करिणीमिव ॥१०७४॥
गृहापवरके न्यस्य सा बन्दीमिव चन्दनाम् ।
कपाटसंपुटं दत्त्वा कोपाटोपादवोचत ॥१०७५॥
यः कश्चित् श्रेष्ठिनोऽप्यग्रे चन्दनां कथयिष्यति ।
स मे कोपहुताशस्य होमद्रव्यं भविष्यति ॥१०७६॥

एवं नियन्त्र्य लोकं स्वं मूला मूलगृहं ययौ ।
सायं श्रेष्ठी समायातोऽपृच्छत् काऽस्ति सुता मम ? ॥१०७७॥
कश्चन श्रेष्ठिनीभीतेः पृच्छतोऽप्यस्य नाऽवदत् ।
सर्वोऽपि गृहिणीहस्तगोचरो गृहमागतः ॥ १०७८ ॥
मत्सुता रमते क्वाऽपि स्वच्छस्वान्ता परौकसि ।
ध्यात्वेत्यगमयत्कालं मृदुधीः स्नेहलाशयः ॥ १०७९ ॥
अपश्यंश्चन्दनां क्वाऽपि द्वितीयेऽह्न्यऽप्यऽभाषत ।
मूकीभूत इव जनो नाऽऽख्यत् किंचन सर्वथा ॥ १०८० ॥
ततः शोकाकुलः श्रेष्ठी प्रोवाच स परिच्छदम् ।
जानन्तश्चेन्नाऽऽख्यास्यथ ताडयिष्यामि वस्तदा ॥१०८१॥
श्रुत्वेत्यऽचिन्तयत् काचित् स्थविरा किंकरी हृदि ।
जीवेद् मे जीवितव्येन चन्दनाऽऽनन्ददा दृशाम् ॥१०८२॥
ममाऽस्त्यऽदूरतो मृत्युर्जरया जर्जरं वपुः ।
अदूरवीक्षिणी दृष्टिर्विस्मृतिश्च गरीयसी ॥ १०८३ ॥
इयं सुयौवना वत्सा महाकष्टेन पूरिता ।
विपत्स्यते, कियद् वल्लीच्छिन्नं पुष्पं हि नन्दति ॥१०८४॥
गदिते चन्दनावृत्ते किमेषा मे विधास्यति ? ।
उदस्ते शकटे हन्त ! किं विधाता गणाधिपः ? ॥१०८५॥
ध्यात्वेत्यऽदर्शयत् तस्य चन्दनारोधमन्दिरम् ।
मूलाया वीक्षमाणायाः कोपारुणदृशो भृशम् ॥१०८६॥
स्वयमुद्घाटयामास द्वारं श्रेष्ठी धनावहः ।
तत्रैक्षत सुतां तृष्णाक्षुधार्तां म्लानविग्रहाम् ॥ १०८७ ॥
पादयोर्निगडैर्गाढं यन्त्रितां हस्तिनीमिव ।
भिक्षुकीमिव मुण्डां च चामुण्डावत्कृशोदरीम् ॥ १०८८ ॥
वहलैर्वहलैः क्षोणीं सिचन्तीं लोचनाश्रुभिः ।
रुष्यन्ती कर्मणे स्वस्य विमृशन्ती निजास्थितिम् ॥१०८९॥
( त्रिभिर्विशेषकम् )

मरौ गतां राजहंसीमिवेमां वीक्ष्य दुःखितः ।
पुत्रिके ! भव विश्वस्ता जल्पन् रसवतीं ययौ ॥ १०९० ॥
दैवाद् भोज्यं विशिष्टं नो वीक्षमाणो धनावहः ।
एतस्याः सूर्पकोणस्थान् कुल्माषान् स समार्पयत् ॥१०९१॥
अमून् भुङ्क्ष्व सुते ! तावद् यावत् कर्मारमानये ।
भवन्निगडविच्छेदे गदित्वेत्यऽगमद् धनी ॥ १०९२ ॥
ऊर्ध्वस्था चन्दना चित्ते चिन्तयन्तीत्यऽखिद्यत ।
मम राजकुले जन्म क्वेदं चेटीत्वचेष्टितम् ? ॥ १०९३ ॥
चेदागां श्रेष्ठिनो गेहे कुतोऽवस्थेदृशी मम ? ।
काकमांसं तदुच्छिष्टं स्वल्पं तदपि याचितम् ॥ १०९४ ॥
षष्ठपारणकालेऽमी कुल्माषा मम भुक्तये ।
यद्याऽऽयात्यऽतिथिः कोऽपि चारित्री समतानिधिः॥१०९५॥
अदत्तं भुज्यते यच्च तत्पशूनां समञ्जसम् ।
अतिथेः संविभागेन भोजनं भाजनं श्रियाम् ॥ १०९६ ॥
विचिन्त्यैवं सुता राज्ञो द्वाराभिमुखमैक्षत ।
ईक्षितैरतिथिं प्रेम्णाऽऽकारयन्तीव दूरतः ॥ १०९७ ॥
इतश्च श्रीमहावीरो भिक्षायै पर्यटन् पुरि ।
पुण्यराशिरिवैतस्या मूर्तिमान् समुपागमत् ॥ १०९८ ॥
अहो ! अहो ! तपःपात्रं निश्रेयसश्रियां मुनिः ।
कोऽपि कोऽपि महासत्त्वः स्वशरीरेऽपि निर्ममः ॥१०९९॥
ईदृक्षाय तपःस्थाय पुरा जन्मनि नो मया ।
प्रदत्तं किंचन क्वापि तदवस्थाऽजनीदृशी ॥ ११०० ॥
अथवा मे महत्पुण्यं यदसावागतो मुनिः ।
उच्छ्वसतीव मे चित्तममुष्मात् खेदभागपि ॥ ११०१ ॥
ध्यात्वेति चन्दनाऽचालीत् कुल्माषान्वितसूर्पिका ।
एकं पादं ददावन्तस्तद्देहल्याः परं बहिः ॥ ११०२ ॥
देहलीं निगडैर्गाढमाक्रमितुमनीश्वरी ।

तत्रैवास्थाद् दृढभक्तिर्जिननाथमुवाच च ॥ ११०३ ॥
कल्पन्ते यदि कुल्माषा भगवन्! भवतारक!।
गृह्यतां सूर्पकोणेन ममानुग्रहकाम्यया ॥ ११०४ ॥
द्रव्यक्षेत्रादिसम्पूर्णं विज्ञायाऽभिग्रहं जिनः।
करं कुल्माषभिक्षायै ततः प्रासारयद् वरम् ॥ ११०५ ॥
धन्याऽस्मि कृतपुण्याऽस्मि श्लाघ्याऽस्मि क्षमिणामपि।
सुलब्धपात्रदानाऽस्मि मनस्येवं विचिन्वती ॥ ११६० ॥
वीक्षमाणा जगदिदं स्वाभाविकमुदान्वितम्।
विस्मरन्ती क्षुधाग्लानिं जिनरूपविलोकनात् ॥ ११०७ ॥
उल्लसत्प्रोतरोमाञ्चा कुल्माषांस्तीर्थकृत्करे।
अक्षिपत्सूर्पकोणेन कतिचिद् भक्तिवत्सला ॥ ११०८ ॥
( त्रिभिर्विशेषकम् )
अहो! दानमहो! दानं श्लाघमाना मुहुर्मुहुः।
तत्र प्रीत्याऽऽययुर्देवा दीप्यमानास्तनुद्युता ॥ ११०९ ॥
पञ्चदिव्याभिषेकश्च विदधुर्जयबन्धुरम्।
तुत्रुटुर्निगडान्यस्या जीर्णरज्जुवदञ्जसा ॥ १११० ॥
पादयोर्नूपूरे तस्या जज्ञाते हेमनिर्मिते।
तत्कालं केशपाशश्च पूर्व्वप्रेम्ण इवागतः ॥ ११११ ॥
सर्व्वाङ्गमपि नेपथ्यधारिणी धारिणीसुता।
वीरभक्तैः सुरैश्चक्रे देवीव क्षितिचारिणी ॥ १११२ ॥
दिव्यां भेरीं नभोमार्गे ताडयन्तो मुहुर्मुहुः।
जयनादं वितन्वन्तो ननृतुर्नाकवासिनः ॥ १११३ ॥
तं श्रुत्वा दुन्दुभिध्वानं शतानीको मृगावती।
सुगुप्तो नन्दया सार्द्धं तत्रेयुर्जिनपारणे ॥ १११४ ॥
सम्पूर्णाभिग्रहं वीरं विज्ञायाऽवधिना हरिः।
उत्फुल्लचेता आगच्छत् द्योतयंस्तेजसा नभः ॥ १११५ ॥
दधिवाहनभूपालकञ्चुकी सम्पुलाभिधः।

शतानीकसमीपस्थश्चम्पावस्कन्द आगतः ॥ १११६ ॥
तस्मिन्नेत्य वसुमतीं दृष्ट्वा तत्पादयोः स्थितः ।
अरोदीद् मुक्तकण्ठत्वाद् रोदयन्नितरानपि ॥ १११७ ॥
किमु रोदिषि राज्ञोक्तः कञ्चुकीति जगाद तम् ? ।
दधिवाहनभूरेषा धारिणीकुक्षिसम्भवा ॥१११८॥
निजराज्यपरिभ्रष्टां चेटीवत् परवेश्मगाम् ।
मुक्तकण्ठं रोदिमि स्म वीक्ष्येमां स्वामिनन्दिनीम् ॥१११९॥
राजा प्राह न शोच्येयं ययाऽर्हन् प्रतिलाभितः ।
आ संसृतेरियं धन्या वीरं याऽपारयत् प्रभुम् ॥११२०॥
मृगावत्युवाचेयं भगिनी मम धारिणी ।
नाथेयं मम यामेयी नयनानन्ददायिनी ॥११२१॥
पञ्चभिर्दिवसैर्न्यूनषण्मासान् तपसो विधेः ।
विधाय पारणां वीरो धनगेहाद् विनिर्गतः ॥११२२॥
आदित्सुर्लोभतो रत्नवृष्टिं भूमीपतिस्ततः ।
निषिद्धो हरिणाऽगृह्णाच्चन्दनाऽऽदेशतो धनी ॥११२३॥
उत्पन्नकेवलज्ञानाच्चन्दना ज्ञातिनन्दनात् ।
व्रतमादायनिर्वाणपदमेष्यति शाश्वतम् ॥११२४॥
सुपात्रदानमाहात्म्यात् तत्क्षणात् संपदः सताम् ।
घनाम्भःसिक्तवल्लीनां यथान्यायं वनश्रियः ॥११२५॥
इत्थं श्रावकधर्मस्य व्रतानि परिपालयन् ।
क्रमादुपासको मोक्षसौख्यभाग् द्वित्रिजन्मतः ॥११२६॥
ततः श्रीकुम्भभूपालः प्रोवाच रुचिरं वचः ।
श्राद्धधर्माद् विरक्तोऽस्मि क्रमशो मोक्षदायकात् ॥११२७॥
अथोत्थाय पुरीप्राप्तः श्रीकुम्भः पृथिवीपतिः ।
आहूय नन्दनं मल्लं नाम राज्ये न्यवीविशत् ॥११२८॥
षडपि स्वामिमित्राणि न्यस्य राज्ये तनूद्भवान् ।
अचलन् शिबिकासीना विमानस्था इवर्भवः[1] ॥११२९॥

१ ऋभवो देवा इत्यर्थः ।

महता विस्तरेणाऽथ स्फीतसंगीतमङ्गलः ।
देवैर्व्योमस्थितैर्वीक्षमाणः कौतुकितेक्षणैः ॥११३०॥
प्रविव्रजिषुभिश्चाऽन्यैर्यथावृद्धपुरस्सरैः ।
प्रभावत्या समं देव्या पराभिश्च महीपतिः ॥११३१॥
महान्तमुत्सवं कृत्वा प्रदक्षिणिततीर्थकृत् ।
उवाच स्वामिनं भक्त्या मां तारय भवाम्बुधेः११३२॥
प्रभोः षडपि मित्राणि परिच्छदयुतान्यथ ।
बभापिरे जगन्नाथं नाथ! तारय संसृतेः ॥११३३॥
अथ श्रीकुम्भभूपालप्रमुखान् नरपुङ्गवान् ।
प्रभावतीप्रभृतिकाः पौरनारीरनेकशः ॥११३४॥
सामायिकव्रतोच्चारपूर्वं मल्लिजिनेश्वरः ।
स्वयं प्रव्राजयामास वासनिक्षेपपूर्वकम् ॥११३५॥
षडपि स्वामिमित्राणि प्रभोः वक्त्राद् प्रवव्रजुः ।
क्रमाद् केवलमासाद्य नाथप्राक् शिवगामिनः॥११३६॥
आद्यशिष्यो जिनेन्द्रस्य भिषगाख्यो गणाग्रणीः ।
सप्ताविंशतिरन्येऽपि बभूवुर्भुवनोत्तमाः ॥ ११३७ ॥
उत्पादविगमध्रौव्यत्रिपद्यास्तेऽनुसारतः ।
द्वादशाङ्गानि पूर्णानि रचयामासुरञ्जसा ॥ ११३८ ॥
दिव्यचूर्णभृते स्थाले विधृते वज्रिणा स्वयम् ।
स्वामिनोत्थाय तन्मौलौ वासाः क्षिप्ता यथाक्रमम्११३९
गर्जत्सु सुरतूर्येषु प्रनृत्यत्स्वमरेषु च ।
गीयमानेषु देवीभिर्धवलेषूज्ज्वलेषु च ॥११४०॥
सूत्रेणार्थेन सर्वेण तथा तदुभयेन च ।
द्रव्यैर्गुणैश्च पर्यायैर्नयैरपि च सप्तभिः ॥ ११४१ ॥
अनुज्ञामनुयोगस्य गणानुज्ञां च सर्वतः ।
श्रीमल्लिर्दत्तवांस्तेषां प्रत्येकं विधिपूर्वकम् ॥११४२॥
( त्रिभिर्विशेषकम् )

प्राग्वत् पूर्वासने स्थित्वा श्रीमल्लिर्देशनां व्यधात् ।
अनुशास्तिमयीं तेऽपि श्रुत्वा तां बहु मेनिरे ॥११४३॥
पौरुष्यन्ते प्रभोर्भ्राता श्रीमल्लः क्षितिपालकः ।
तण्डुलानां चतुष्प्रस्थीं चतुःस्थालस्थितामथ॥११४४॥
वज्रभृन्निहितैर्गन्धैर्द्विगुणीकृतसौरभैः ।
सौधादाऽऽनाययामास तूर्यगीतपुरस्सरम् ॥११४५॥
(युग्मम्)
ढौकित्वा स्वामिनोऽग्रेऽसौ दिव्यपूजापुरस्सरं ।
ऊर्ध्वमुत्क्षिप्य तत्क्षिप्त तदर्द्धं जगृहुः सुराः ॥११४६॥
भूगतार्धं नृपेणात्तं परमानन्ददायिना ।
शेषमर्द्धं विभज्याऽन्यैर्गोत्रिवद् जगृहे जनैः ॥११४७॥
पूर्वोत्पन्ना रुजः सर्वा नवीना न भवन्ति यत् ।
षण्मासीं यावदेतस्य स्थलेर्माहात्म्यतोऽङ्गिनाम्॥११४८
अथोत्तस्थौ जगन्नाथः श्रीमान् मल्लिर्निजासनात् ।
अन्तरद्वारमार्गेण निर्ययौ त्रिदशान्वितः ॥११४९॥
द्वितीयवप्रमध्यस्थेशानकाष्ठाविभागगे ।
देवच्छन्दे प्रभुर्मल्लिर्गतो विश्रामहेतवे ॥११५०॥
धियां निधिर्भिषक् श्रीमान् सूरिर्गणभृद् गुणी ।
स्वामिनः पादपीठस्थो विदधे धर्मदेशनाम् ॥११५१॥
खेदच्छेदो जिनेन्द्रस्य शिष्यौघे गुणदीपनम् ।
सभायां प्रत्ययो द्वाभ्यां गणभृत्कथनं गुणाः॥११५२॥
गणभृद्देशनाप्रान्ते प्रणम्य त्रिदशेश्वराः ।
स्थानं निजं निजं जग्मुः स्मरन्तः स्वामिदेशनाम् ११५३
तीर्थे तस्मिन्नभूद् यक्षः कुबेरो नाम भक्तिमान् ।
इन्द्रायुधद्युतिर्दोर्भिरष्टाभिश्च मनोहरः ॥११५४॥
वरदेनाऽपि शूलेनाऽभयदेनाऽपि पर्शुना ।
चतुर्भिर्दक्षिणैरित्थं भुजैर्भूषितविग्रहः ॥ ११५५ ॥

वामेस्तु शक्तिमृद्धरवीजपूराक्षिमृत्रिभिः ।
चश्चचतुर्मुखाम्भोजः श्रीमल्लिक्रमसेवकः ॥११५६॥
( त्रिभिर्विशेषकम् )

वैरोट्या नाम तत्तीर्थे समभूत् शासनेश्वरी ।
कृष्णाङ्गी कमलासीना सोमा सोमाननाम्बुजा॥११५७॥

पुरः पुरस्थैर्विनयाभिनम्रै-
र्वन्दारुभिर्देवगणैरुपेतः ।
हेमाम्बुजन्यस्तपदारविन्दः
श्रीमल्लिनाथो विजहार तस्मात् ॥११५८॥

इत्याचार्यश्रीविनयचन्द्रविरचिते श्रीमल्लिस्वामिचरिते महा-
काव्ये विनयाङ्के सम्यक्त्वपूर्वकप्राणातिपातादिव्रतेषु
सुदत्त-सुबन्धु-सङ्गमक-सुदर्शन-भोगदत्त-मित्रानन्द-
भीम-भीमसेन-लाभनन्दि-ताराचन्द्र-चन्द्रा-
वतसक-धनसेन शिखरसेन-चन्दनबाला
फलव्यावर्णनो नाम सप्तम. सर्ग ।

---

अर्हम्

# अष्टमः सर्गः ।

अथ श्रीभगवान् मल्लिर्निदधानः क्रमद्वयीम् ।
दिव्यस्वर्णसरोजेषु न्यस्यमानेषु नाकिभिः ॥ १ ॥
प्रभापूरितदिक्चक्रे धर्मचक्रे प्रसर्पति ।
पुरः स्थिते विराजिष्णौ रविसब्रह्मचारिणि ॥ २ ॥
ऋतुषु भ्राजमानेषु स्मेरैः पुष्पैर्निजैर्निजैः ।
कण्टकेषु च जातेषु नम्रेषु न्यग्मुखेषु च ॥ ३ ॥
प्रदक्षिणं च गच्छत्सु ततपक्षेषु पक्षिषु ।

अनुकूलेऽनिले वाति जन्तुजातसुखावहम् ॥ ४ ॥
विहरंस्त्रिजगन्नाथः सनाथोऽतिशयश्रिया ।
पुरं चन्द्रपुरं प्राप कुशावर्त्तविभूषणम् ॥ ५ ॥
( पञ्चभिः कुलकम् )
तत्राऽभून्नास्तिको राजाऽभिधानादास्तिकः पुनः ।
अध्यक्षप्रमितिवादी पञ्चभूतस्थितौ रतः ॥ ६ ॥
सर्वज्ञः प्राप इत्युच्चैः श्रुत्वा कोपनमानसः ।
विवादायाऽऽस्तिको राजा गतवान् स्वामिसंनिधौ ॥७॥
उवाच जगतां स्वामी गिरा तत्त्वकिरा स्वयम् ।
जीवाजीवादितत्त्वानि सदृष्टान्तानि सप्तधा ॥ ८ ॥
अथ दध्याविति क्षोणीपालो हृदि विमोहवान् ।
असदेतदिहाध्यक्षप्रमाणाविषयत्वतः ॥ ९ ॥
प्रभुरूचे महीपाल ! नास्तिता याऽस्ति ते हृदि ।
तवैवाऽपेक्षया सेयमथवा सर्वदेहिनाम् ॥ १० ॥
प्रत्यक्षं चेत् तवाभीष्टं तदा वंश्यादिपुरुषान् ।
त्वमनुमन्यसे नो चेद् तदा सर्वं विसंस्थुलम् ॥११॥
क्वचिदध्यक्षगम्योऽयं क्वचिद् परोक्षगोचरः ।
क्वचिच्चानुमतेर्गम्यस्तस्माद् जीवोऽस्ति सर्वथा ॥ १२ ॥
तत्सिद्धौ च तवैवेह सर्वज्ञत्वं प्रसिद्ध्यति ।
सर्वज्ञत्वे च संसिद्धे जीवत्वं सर्वमेव हि ॥१३॥
जीवत्वेऽपि च संसिद्धे पुण्यपापादयोऽखिलाः ।
उद्वृत्ते हि तरौ किं न भवेयुः पल्लवोदयाः ? ॥१४॥
अथाह भूपतिः स्वामिन् ! परलोकोऽस्ति चेद् क्वचित् ।
आसीद् धर्मरता मेऽम्बा सर्वदा सदयाङ्गिनाम् ॥१५॥
अथ युष्मन्मतेनाऽसौ भविष्यति दिवं गता ।
तातश्च कृतपापेन निश्चितं नरकं गतः ॥१६॥
मन्माता किं न मामेत्य प्रबोधयति सत्वरम् ? ।

पिता तु नरकादेत्य किं न यच्छति दर्शनम् ? ॥१७॥
प्रेत्यामुत्रस्थितिः तस्मात् जगन्नाथ ! न विद्यते ।
प्रत्यये व्यत्यये दृष्टे किमु मुह्यति कोविदः ? ॥१८॥
प्रभुरूचे महीपाल ! यत् ते माता समेति नो ।
दिवो मनुष्यलोकेऽस्मिंस्तदाऽऽकर्णय कारणम् ॥१९॥
देवा हि विषयासक्ता नानाक्रीडाविधायिनः ।
असमाप्तविधेयार्था मनुष्येषु विनिस्पृहाः ॥२०॥
मनुष्यलोकदुर्गन्धैरिहाऽऽगच्छन्ति नैव ते ।
विना कल्याणकादीनि पूर्वस्नेहं च भूपते ! ॥ २१ ॥
परमाधार्मिकैः कामं बाध्यमाना निरन्तरम् ।
नारकास्तु पराधीना आगच्छेयुः कथं किल ? ॥२२॥
भूयोऽपि भूपतिः प्रोचे भगवन् ! एकदा मया ।
एकश्चौरो महाकुम्भ्यां प्रक्षिप्तः खलु यत् ततः ॥२३॥
पिधायोच्चैर्गुरुद्वारे निश्छिद्रे जतुसारिते ।
मृतश्चौरो मयाऽलोकि तत् जीवस्य न निर्गमः ॥२४॥
कुम्भीमध्येऽपि यत्नेन वीक्ष्यमाणैः मुहुर्मुहुः ।
जीवः कुत्रापि नो दृष्टो दृष्टास्तु कृमिराशयः ॥२५॥
तद्वदन्यो मया दस्युः सूक्ष्मखण्डानि कारितः ।
न तत्र वीक्षितः प्राणी तस्मान्नास्तीति चिन्त्यताम्॥२६॥
अथार्हन् न्यगदद् वीरं कुम्भीमध्ये स्थितो नरः ।
निश्छिद्रे पिहितद्वारे शङ्खमादाय वादयेत् ॥२७॥
स शङ्खनिस्वनो भद्र ! यथा बाह्ये प्रसर्पति ।
तथाऽप्यसुमान् गच्छन् दृश्यते न त्रिलोकनात् ॥२८॥
ध्मायमाने लोहपिण्डे पुरुषेण निरन्तरम् ।
सर्वात्मना कुतस्तत्र प्रविवेश हुताशनः ॥ २९ ॥
तथायं प्रविशन्नात्मा निर्गच्छन् न च वीक्ष्यते ।
दृष्टकृमिगणो राजन् ! दृष्टान्तोऽयं मयोदितः ॥३०॥

अथो विहस्य भूपालोऽप्यूचे किञ्चिद् विमोहवान् ।
अर्हन्! परेद्यविश्चौरो विधृतो विहितागसः ॥ ३१ ॥
जीवन्नेव तुलारूढो पौराध्यक्षं प्रतोलितः ।
उच्छ्वासस्य निरोधेन मारयित्वा तथैव सः ॥३२॥
तोलितस्तत्क्षणं यावांस्तावानेव जिनेश्वरः ।
तस्माद् देहात् कथं प्राणी व्यतिरिक्तो विचिन्त्यताम्?३३
प्रभुरूचेऽथ केनाऽपि गोपालेन दृतिर्दृढम् ।
तोलितो वातसम्पूर्णो रिक्तोऽपि हि तथा नथा ॥३४॥
तस्मात् सर्वाङ्गसंस्पर्शे कथञ्चिद् देहतः पृथक् ।
स्वसंवेदनसंसिद्धो जीवः प्रत्यक्ष एव हि ॥३५॥
तथाहि–
चैतन्यानुगतानेकचलनस्पन्दनादिभिः ।
चेष्टाभिर्लक्ष्यते जीवो वातवद् ध्वजकम्पनात् ॥३६॥
यदूचे—
लोकाकाशसमप्रदेशनिचयः कर्तोपभोक्ता स्वयं-
सङ्कोचप्रविकाशधर्म्मसदनं कायप्रमाणस्तथा ।
चैतन्यान्वितवीर्यलब्धिकलितो भोगोपभोगैर्युतो-
भेदच्छेदवियुक्तसर्वगतिको जीवोऽत्र संसारगः॥३७॥
राजाऽऽह भगवन्नद्य सद्यो मोहः पलायितः ।
स्फुरिते चेतसि स्फीतमास्तिकत्वं यथोदितम् ॥३८॥
परं कुलक्रमायातं नास्तिकत्वं सदा धृतम् ।
विमोक्तुं तत् कथं शक्तो भवेदात्मनि हीनता ॥३९॥
प्रभुः प्राह महाभाग! स्तोकमेतद् विवेकिनाम् ।
किञ्च व्याधिः क्रमायातो दारिद्र्यं नाऽत्र मुच्यते? ॥४०॥
यथेह वणिजः केऽपि नानावाहनशालिनः ।
गता वाणिज्यकार्येण लोहकारं व्यलोकयन् ॥४१॥
ततो लोहं गृहीत्वा ते गच्छन्तः पुनरग्रतः ।

त्रपुकाकरमालोक्य मुक्त्वाऽयो जगृहुस्त्रपु ॥४२॥
तानुद्वीक्ष्य महामोहादेको लोहं न मुञ्चति ।
सीसपत्रं ततस्ताम्रं रूप्यं स्वर्णं महाद्युति ॥४३॥
दृष्ट्वा विमुच्य पूर्वात्तं वणिजो मुदिताशयाः ।
लोभवन्तः स्म गृह्णन्तस्ते मणीननणीयसः ॥४४॥
एकस्तु भण्यमानोऽपि तैर्वणिग्भिः पदे पदे ।
तन्मोहं नैव तत्याज महामोहमिवापरम् ॥४५॥
ततः सर्वे समायाताः स्वेषु स्वेषु गृहेषु ते ।
मणिविक्रयमाहात्म्याद् बभूवुर्धनदा इव ॥४६॥
लोहग्राही तदा तूच्चैर्वीक्ष्य वीक्ष्य दिने दिने ।
सञ्जातराजयक्ष्मेव क्षीयते स्म प्रतिक्षणम् ॥४७॥
तथा तवापि भूमीश ! पश्चात्तापो भविष्यति ।
अथो विमुच्यतामेष कदाग्रहमहाग्रहः ॥४८॥
श्रुत्वेति स्वामिनोदीर्णं प्रभुं नत्वा क्षितीश्वरः ।
उवाच जगतीनाथ ! भवादुत्तारयाऽधुना ॥४९॥
स्वामिन् ! मोहपिशाचो मे नष्टस्त्वन्मूर्त्तियन्त्रितः ।
उद्भूतं च शुभं ज्ञानं ज्ञातं तत्त्वं प्रभूदितम् ॥५०॥
परमेतावता सद्भिः श्लाघ्यतेऽयं भवो नृणाम् ।
निर्वाणान्तसुखप्राप्तेर्हेतवोऽत्रैव यद्गुणाः ॥५१॥
उक्त्वेति नगरीं गत्वा राज्ये न्यस्य स्वनन्दनम् ।
सप्तशतमितै राजपुत्रैः पावित्र्यहेतवे ॥५२॥
दत्वा दानानि सर्वत्र यथार्थो नृप आस्तिकः ।
प्रभूच्चारितसन्मन्त्राद् नाथस्यान्तेऽभवद् यतिः ॥५३॥
इतश्च शाल्मलीग्रामेऽभिरामो गोधनोत्करैः ।
वृषपोषपरः शश्वत् कठसंज्ञः कृषीवलः ॥५४॥
दारिद्र्यभिक्षुकमठी कठीनासाऽस्य वल्लभा ।
आपन्नसत्त्वा समभूत् सा तुतोष स्वमानसे ॥५५॥

गर्भस्थजीवदुष्कर्मभारादिव कठो मृतः ।
संजातनन्दना सूतिव्यथार्त्ता साऽपि दैवतः ॥५६॥
ततः संवर्द्धितो मातृष्वस्रा स्नेहेन बालकः ।
वृत्त्यर्थी ग्राम्यलोकानां वत्सरूपाण्यचारयत् ॥५७॥
यमदूतैरिवोदग्रैर्वत्सरूपाणि गोचरे ।
चरन्ति वृकसङ्घातैर्ग्रस्यन्तेऽस्य पुरःस्थितैः ॥५८॥
तत्तत्स्वामिजनैर्बाढं ताड्यमानः पदे पदे ।
स सीरं वाहयामास परक्षेत्रेषु वृत्तये ॥५९॥
क्षेत्रेषु येषां येषां स हलं वाहयति स्फुटम् ।
तेषां तेषां च धान्यस्य न स्यादेकः कणोऽपि हि॥६०॥
रे ! रे ! कपोतपोताभ ! त्यज क्षेत्राणि नः क्षणात् ।
तर्ज्यमान इति ग्राम्यैः स स्वग्रामाद् विनिर्ययौ ॥६१॥
स बभ्राम महीपीठं भूतार्त इव शून्यधीः ।
उत्खातो रोहणस्तेन नाप्तं किञ्चिद् रजो विना ॥६२॥
यतः—
यत्र वा तत्र वा यातु पाताले वा प्रगच्छतु ।
तथाऽपि पूर्वजीर्णानि कर्माणि पुर इयूति ॥ ॥ ६३ ॥
ततो निवृत्तो दीनास्यः सर्वथा पुण्यवर्जितः ।
सर्वोपायपरिभ्रष्टो मुष्टो दुष्कर्मधर्मणा ॥ ६४ ॥
नैतस्य भोजनं दातुमुदयास्तमयान्तरे ।
प्रभुरस्मीति ध्यात्वेति ययावस्तं दिवाकरः ॥ ६५ ॥
इतश्च तेन संध्यायां सुरसद्म मनोहरम् ।
अरण्यानीमहाम्भोधेरन्तरीपमिवैक्षत् ॥ ६६ ॥
मध्यस्थितः पुमान् कोऽपि भद्राकारः सुलक्षणः ।
स्वर्णवर्णवपुस्तेन ददृशे दिवसात्यये ॥ ६७ ॥
ततश्चित्रघटं पुष्पैरर्चयन् जिनबिम्बवत् ।
घण्टानुरणनाकारं हुङ्कारं विदधेऽप्यसौ ॥ ६८ ॥

तस्य प्रभावतो भास्वान् प्रसादः समजायत ।
तत्र दिव्याङ्गनाकाराश्चिक्रीडुश्चपलेक्षणाः ॥ ६९ ॥
जलैरुष्णैः कवोष्णैश्च ताभिः स्नानमकारयत् ।
स्फूर्जज्जयजयोद्दामप्रथमोत्पन्नदेववत् ॥ ७० ॥
असावङ्गे नरः सिद्धश्चलत्कल्पद्रुमोपमः ।
आपादमस्तकं शस्ताऽऽभरणश्रेणिकां व्यधात् ॥७१॥
ततो रसवतीं दिव्यां बुभुजे सिद्धपुरुषः ।
विद्याः प्रसाधिताः किं किं न कुर्वन्ति समीहितम्?॥७२॥
त्रियामां सुखसम्भारैरेकयाममिवोज्ज्वलैः ।
अतिवाह्य प्रभातेऽसावुपजह्रेऽखिलं च तत् ॥ ७३ ॥
चित्रकुम्भं निवेश्याऽऽशु सुरमन्दिरकोणके ।
पुनः प्रभाते देवौकोमध्येऽस्थात् सिद्धमन्त्रभृत् ॥७४॥
एतत् सर्वं विलोक्याऽथ स नरो ग्रामसम्भवः ।
अमुं गुरुमिवात्यन्तं सिषेवे भक्तिवत्सलः ॥ ७५ ॥
पादसंवाहनाद्यैस्तु ग्रामीणः सिद्धपुरुषम् ।
आराध्य प्रत्यहं सोऽथ तुतोष विनयादलम् ॥ ७६ ॥
यतः—
विनयः सम्पदां धाम विनयः कीर्तिकार्मणम् ।
विनयो धर्मवार्धीन्दुर्विनयो मूलमुन्नतेः ॥ ७७ ॥
हंहो ! तवाऽहं तुष्टोऽस्मि याचस्वेप्सितमात्मनः ।
अथ ग्राम्योऽवदत् सिद्धं कोशीकृतकरद्वयः ॥ ७८ ॥
सर्वथा हन्त ! निष्पुण्यो मृतस्वजनबान्धवः ।
मन्दप्रतिभ एकाकी नभोमार्गादिव च्युतः ॥ ७९ ॥
युष्माकं शरणं प्राप्तो यद् युक्तं तत् समाचरेः ।
ससत्त्वा हि महासत्त्वाः परोपकृतिकर्मणि ॥ ८० ॥
यतः—
दयालुत्वमनौद्धत्यं दाक्षिण्यं प्रियभाषिता ।

परोपकारकारित्वं मण्डनानि महात्मनाम् ॥ ८१ ॥
अहो ! अयमपुण्यैकोऽहो ! दौर्गत्यदूषितः ।
अहो ! विनयवानेष ध्यायति स्मेति सिद्धराट् ॥८२॥
एतस्य मन्दभाग्यस्य यत् क्रियेतोपकारकम् ।
तत् तत्स्याद् बहुपुण्यार्थं व्याधितस्यौषधं यथा ॥८३॥
यतः—
संपदं प्राप्य कर्त्तव्या सर्वसत्त्वोपकारिता ।
काकोऽपि पूरयत्युच्चैर्जठरं परितो भ्रमन् ॥ ८४ ॥
विमृश्येत्यब्रवीदेवं प्रहृष्टः सिद्धपूरुषः ।
ददामि भद्र ! ते विद्यां कामितश्रीमहोदधिम् ॥ ८५ ॥
विद्याभिमन्त्रितं किं वा चित्रं कुम्भमिमं शुभम् ? ।
एतद् विचिन्त्य सम्यक् त्वं वद वाञ्छितमात्मनः ॥८६॥
ग्रामीणश्चिन्तयामास यदि विद्याक्षरं मम ।
एकं तु विस्मृतं दैवात् तदा का नाम मे गतिः ? ॥८७॥
अयं चित्रघटो मेऽस्तु सर्वाभिष्टार्थसार्थदः ।
विमृश्येत्यवदद् गोधो देवार्पय घटं मम ॥ ८८ ॥
विद्यासिद्धेन स घटः प्रदत्तः कल्पवृक्षवत् ।
यत्प्रभावेन सर्वेऽर्थाः सम्पद्यन्ते समीहिताः ॥ ८९ ॥
असौ चित्रघटं प्राप्य शासनाप्तनिधानवत् ।
एवं विचिन्तयामास स्वग्रामाभिमुखं व्रजन् ॥ ९० ॥
किं तया क्रियते लक्ष्म्या या स्यादन्यत्र भूयसी ? ।
यां सुहृदो न वीक्ष्यन्ते प्रमोदोत्फुल्लचक्षुषः ॥ ९१ ॥
अथासौ ग्राममापन्नो दधानो मस्तके घटम् ।
चित्रकुम्भ इति नरैराहूतः संज्ञया मुदा ॥ ९२ ॥
तेषां विलोकमानानां घटमाहात्म्यतो न्वहम् ।
सौधं विरचयामास क्षणात् काव्यं कवीन्द्रवत् ॥९३॥
कुम्भभूरिप्रभावेण नेपथ्यादि विनिर्ममौ ।

अल्पैरपि दिनैः सोऽभूदामुष्यायण उच्चकैः ॥ ९४ ॥
अबन्धोरपि तस्याऽथ समजायन्त बान्धवाः ।
सोऽयं लक्ष्म्या महादेव्याः प्रभावः प्रेक्षति क्षितौ॥९५॥
यतः—
अनाथानामियं नेत्री निःसखानामियं सखी ।
अगुरूणामियं गुर्वी रत्नाकरतनूद्भवा ॥ ९६ ॥
अन्यदा सुजनास्तेन मीलिताः शुभपर्वणि ।
भोजिता विविधैर्भोज्यैर्वस्त्रैश्च प्रतिलाभिताः ॥ ९७ ॥
ततस्ते सुजना हर्षाद् ननृतुर्लयबन्धुरम् ।
सोऽपि चित्रघटं मौलौ विधायाऽऽनन्दमन्दिरम् ॥९८॥
हस्ताभ्यां तेन तालायां प्रदत्तायां प्रमादतः ।
पपात मौलितः कुम्भो बभञ्जाऽप्याऽऽमपात्रवत् ॥९९॥
( युग्मम् )
एतत् सर्वं तिरोजज्ञे[1] गन्धर्वनगरोपमम् ।
घटभङ्गादिवैतस्य भङ्गं पुण्यानि लेभिरे ॥ १०० ॥
पूर्वोपार्जितदारिद्र्यं पुण्यर्धेर्दूरतो गतम् ।
पूर्वस्नेहादिवैतस्य ढुढौके क्षणमात्रतः ॥ १०१ ॥
सबन्धुः शून्यचेतस्को भ्राम्यन् भूतार्तवद् भृशम् ।
पुरं चन्द्रपुरं प्राप कुशाग्रमुखमण्डनम् ॥ १०२ ॥
गतस्तत्राऽशृणोदेष श्रीसर्वज्ञोऽत्र देवता ।
कोऽप्यस्ति यो ममोपायं घटस्य घटयिष्यति ॥१०३॥
ध्यात्वेति स्वामिनं नत्वा भद्रको भद्रकाशयः ।
उपाविक्षत् सभागन्तर्वीक्षमाणः प्रभुश्रियम् ॥१०४॥
चित्रकुम्भार्जनोपायं हृदये ध्यातवानसि ।
श्रुत्वेति तद्गिरः सत्यमसौ सर्वज्ञदेवता ॥ १०५ ॥
तस्मादेतस्य पार्श्वेऽहं चित्रकुम्भार्जनासुखम् ।

१ तिरोभूतामित्यपि ।

अविनाशवशं याचे गोधोऽधादिति चेतसि ॥१०६॥
अथोवाच प्रभुर्भद्र ! यदीच्छसि सुखं किल ।
अविनश्वरमुद्दामं तत् प्रव्रज्य समार्जय ॥ १०७ ॥
ततो जगत्पते ! दीक्षां देहि नित्यसुखावहाम् ।
येन ध्यायामि नाथ ! त्वां सिद्धपुरुषसन्निभम्॥१०८॥
चित्रकुम्भनरः सोऽथ सवन्धुः सप्रियः प्रभोः ।
पार्श्वे दीक्षां स्म गृह्णाति किं न स्याल्लघुकर्मणाम्? १०९
इतश्च भारते वर्षे गङ्गासिन्धुविराजिते ।
हस्तिनागपुरं नाम पुरं सुरपुरोपमम् ॥ ११० ॥
तत्र सिंहरथो नाम भूपतिः सिंहविक्रमः ।
अभूत् काञ्चनमालेति तस्य प्राणप्रिया सती ॥१११॥
गुरुपादाम्बुजद्वन्द्वसेवाहेवाकषट्पदः ।
तत्रासीज्जिनदत्ताख्यो धार्मिको वणिगग्रणीः ॥ ११२ ॥
तस्य गेहे प्रतिज्ञातकर्मनिर्वाहकर्मठः ।
अभवद् देवपालाख्यो गोपालः क्षत्रवंशभूः ॥ ११३ ॥
दृष्ट्वा सद्धर्मनिष्ठं स श्रेष्ठिनं शुद्धमानसः ।
भद्रकत्वेन गोपालः चिन्तयामासिवानिति ॥ ११४ ॥
धर्मेण द्रविणं राज्यं धर्मेण विजयश्रियः ।
धर्मेण कामिता अर्था धर्मेण सुखकीर्तयः ॥ ११५ ॥
अतुलं मङ्गलं धर्मो धर्मः पापद्रुमाऽनलः ।
धर्मश्चतुर्गतिक्रोडनिपतज्जन्तुधारकः ॥ ११६ ॥
उत्तिष्ठन्तं शयानं च नमस्कारपरायणम् ।
दृष्ट्वाऽथ श्रेष्ठिनं देवपालः पप्रच्छ भद्रकः ॥ ११७ ॥
श्रेष्ठिन्नहर्निशं मन्त्रकल्पं किमिदमुच्यते ? ।
असावाह महाभाग ! विद्यतेऽस्य महाफलम् ॥ ११८ ॥
अधनानां धनं रूपहीनानां रूपमुत्तमम् ।
रोगिणां रोगनिर्णाशं नमस्कारः करोत्यसौ ॥ ११९ ॥

श्रुत्वेति श्रेष्ठिनो वाक्यं देवपालः शुभाशयः ।
परमेष्ठिमहामन्त्रमपाठीत् सर्वकामदम् ॥ १२० ॥
कतिपयेषु जातेषु वासरेषु समाययौ ।
वर्षाकालो महाभीष्मग्रीष्मद्रुमपरश्वधः ॥ १२१ ॥
धरा धाराधरं दृष्ट्वाऽभीष्टमागतमुन्नतम् ।
कदम्बकुटजोद्भूतैः पुष्पैरर्घमिवाऽतनोत् ॥ १२२ ॥
मेघराजागमं दृष्ट्वा दूराद् वैतालिका इव ।
चक्रुर्जयजयारावं केकाव्याजेन केकिनः ॥ १२३ ॥
समायान्ति महोत्कण्ठाः पथिकाः स्वगृहानभि[1] ।
कः करोति जडैः सार्द्धं संगमं हि मनागपि ॥ १२४ ॥
पन्थानो गतसंचारा जाता दुर्दमकर्दमात् ।
जाड्योदये हि संवृत्ते सर्वं दुःखाकरं नृणाम् ॥ १२५ ॥
उदकेनोदपूर्यन्त भूमिभागाः प्रतिक्षणम् ।
पुण्याधिकानां कमलासंचयेन गृहा इव ॥ १२६ ॥
नदीतीरेषु रच्यन्ते वालुकाभिः कुमारकैः ।
देवागाराणि रम्याणि भूमीरोमाङ्कुरा इव ॥ १२७ ॥
अभियोगात्तकमला राजहंसा जिगीषवः ।
संचेरुराश्रयं स्वीयं स्वपक्षवलशालिनः ॥ १२८ ॥
गवां वृन्दमथादाय वर्षत्यथ घनाघने ।
चारणार्थं गिरेः कुञ्जे गतवान् धेनुपालकः ॥१२९ ॥
करविन्यस्तदण्डोऽसौ कम्वलावृतविग्रहः ।
नदीरयक्षतक्षोण्यां जिनवक्त्रं ददर्श सः ॥ १३० ॥
तद्दर्शनघनेनाऽऽशु संजातानन्दकन्दलः ।
विम्वमाकृष्टवानेष लब्धाद्भुतनिधानवत् ॥ १३१ ॥
विधाय वेदिकां तत्र जिनविम्वं न्यवीविशत् ।
मन्दिरं रचयाञ्चक्रे तृणभित्तिविभूषितम् ॥ १३२ ॥

१ प्रतीत्यपि ।

धन्योऽहं कृतपुण्योऽहं यस्य मे वृषभो जिनः ।
प्रत्यक्षोऽभूत् स्वयं देवाधिदेवः परमेश्वरः ॥ १३३ ॥
नदीतीरे कृतस्नानः प्रावृतश्वेतचीवरः ।
स स्नात्रं कृतवांस्तस्य पवित्रं स्वं तु निर्ममौ ॥ १३४ ॥
सिन्दुवारैर्नवैर्गोप आनर्च त्रिजगद्गुरुम् ।
अथ तुष्टाव भावेन नम्रमौलिशुभाशयः ॥ १३५ ॥
नमः श्रीवृषभेशाय जगद्वन्द्याय तायिने ।
अनन्तज्ञानसौख्याय मुख्याय परमेष्ठिनाम् ॥ १३६ ॥
एवं स्तुत्वा जिनाधीशं प्रमोदोत्फुल्ललोचनः ।
मेने कृतार्थमात्मानं भक्तिव्यक्तिविकस्वरः ॥ १३७ ॥
यावज्जीवं जिनाधीशं पूजयित्वाऽमुमुत्तमम् ।
भोक्तव्यमिति सोऽकार्षीदिति निश्चयमञ्जसा ॥१३८॥
पुष्पैः कान्तारसंभूतैर्जिनं पूजयतः सतः ।
गोपालदेवपालस्य ययौ कालः कियानपि ॥ १३९ ॥
इतश्च
नृपसिंहरथस्याभूत् पुत्री नाम्ना मनोरमा ।
काञ्चनप्रेयसीकुक्षिसरोमण्डनवारलौ[2] ॥ १४० ॥
जाङ्गुली ग्रीष्मसर्पस्य वर्षाकालोऽन्यदाऽस्फुरत् ।
अब्धिकल्लोलवद् येन जाता मार्गाः सुदुर्गमाः ॥ १४१ ॥
असौ गाढप्रतिज्ञत्वाद् भणितः श्रेष्ठिनाऽपि हि ।
नैवाऽकार्षीत् ततो जग्धं तदेकहृदयः सुधीः ॥ १४२ ॥
पयःपूर्णं नदीतीरं गन्तुं नेशः कथञ्चन ।
उपवासान् वसन् गेहमकार्षीत् सप्त भक्तिभाक् ॥१४३॥
( युग्मम् )
मन्दीभूते नदीतीरे कथञ्चिद् वासरेऽष्टमे ।
उत्तीर्य भुजदण्डाभ्यां निजं चैत्यमगादसौ ॥ १४४ ॥

---

१ तत्र, एवमपि । २ हमीति हृदयम् ।

सुखसागरकल्लोलैरिवाप्तं स्वं विचिन्तयन् ।
प्रणनाम जिनाधीशं पठितस्तोत्रपूर्वकम् ॥ १४५ ॥
तद्भक्तितोषितेनोच्चैःस्थितेन गगनाङ्गणे ।
तदधिष्ठातृदेवेनेत्यूचेऽथ रुचिरं वचः ॥ १४६ ॥
वरं वृणु महाभाग! यथेच्छं स्वच्छमानसः ।
गुरूणां क्रमसेवा हि सफलैव शरीरिणाम् ॥ १४७ ॥
यदि तुष्टोऽसि देवाऽऽशु देहि मे राजसम्पदम् ।
इत्युक्तवान् प्रहृष्टात्मा देवपालः मुदाङ्कितः ॥ १४८ ॥
समुद्रपरिखारम्यां क्षोणीमेकपुरीमिव ।
अचिराल्लप्स्यसे नूनमित्युक्त्वा स तिरोऽभवत् ॥ १४९ ॥
तदाप्रभृति भावेन देवपालो महामतिः ।
प्रमोदभाक् विशेषेण जिनमानर्चे सर्वदा ॥ १५० ॥
अन्यदा बहिरुद्याने दमसारमहामुनेः ।
घातिकर्मक्षयाद् जज्ञे पञ्चमं ज्ञानमुत्तमम् ॥ १५१ ॥
ततः सुधाभुजो हृष्टा पुष्पवृष्टिमथ व्यधुः ।
सुवर्णकमलं चक्रुर्वैक्रियं च मनोहरम् ॥ १५२ ॥
धर्ममाख्यातुमारेभे तत्रासीनो महामुनिः ।
देवागमं विलोक्याऽथ समागाद् वन्दितुं नृपः ॥ १५३ ॥
संसारः कदलीगर्भ इवाऽसारो विशां पते ! ।
निवास इव दुःखानां गृहावासः सदाङ्गिनाम् ॥१५४॥
दम्भोलिनेव यन्मुष्ट्या चूर्ण्यन्ते पर्वतोत्कराः ।
कम्पमानकरास्तेऽपि भवन्ति निधनागमे ॥१५५॥
मृत्योः काले समायाते शरणं नास्ति देहिनाम् ।
जिनोपज्ञं विना धर्मं निर्वाणपदसाधकम् ॥१५६॥
इति श्रुत्वा महीपालो विधाय करकुड्मलम् ।
पप्रच्छ निजमायुष्कं भववासविरागवान् ॥१५७॥

१ शुभाशय इति च । २ नराणामित्यर्थः ।

दिनानि त्रीणि ते राजन्! आयुष्कमवशिष्यते ।
इत्युक्तवान् मुनिर्ज्ञानज्ञातसर्वजगत्स्थितिः ॥१५८॥
शीतार्त्त इव भूपालः कम्पमानकरद्वयः ।
स्तोकेन जीवितव्येन किं करिष्यामि सम्प्रति? ॥१५९॥
अथाह भगवानेव मा विषीद रसापते! ।
अणुनाऽप्यायुषा किं न क्रियते हि विवेकिभिः? ॥१६०॥
मुहूर्त्तमपि सावद्यत्यागः स्यात् शाश्वतश्रिये ।
हन्यन्ते विषकल्लोला एकस्मादपि मन्त्रतः ॥१६१॥
विन्यस्य पुरुषं कञ्चिद् राज्ये प्रबलविक्रमम् ।
आगच्छामि प्रभो! यावत् तत् त्वं तिष्ठ दयानिधे!॥१६२॥
महापुरुष! मा कार्षीः प्रमादं मूलमापदाम् ।
सर्वेषामपि कार्याणां प्रमादः प्रथमो रिपुः ॥१६३॥
प्रणिपत्य गुरोः पादौ यथास्थानमगान्नृपः ।
तच्चिन्तयाऽपि कृच्छ्रेण कृत्स्नं दिनमवाहयत् ॥ १६४ ॥
कोऽधिष्ठितस्य लोकस्य भावी विक्रमवारिधिः ।
केनोपायेन निष्पुत्रो मोक्ष्यामि क्षितिपालनम् ॥ १६५ ॥
तस्य चिन्ता प्रपन्नस्य सिद्धाख्या कुल देवता ।
प्रत्यक्षाऽभूत् तमस्विन्यां दीपिकेव तमोपहा ॥ १६६ ॥
मा कृथाः सर्वथा खेदं नरनाथ! स्वमानसे ।
अभिषिञ्च प्रभाते त्वं दिव्यपञ्चकमुच्चकैः ॥ १६७ ॥
तत्कृतं पुरुषं राज्ये विन्यस्य निजपुत्रवत् ।
परलोकाय पश्चात्त्वं यतस्वोत्त्वेति साऽगमत् ॥१६८॥
प्रभातेऽथाऽभिषिक्तानि पञ्च दिव्यानि भूभुजा ।
भ्रेमुस्तान्यथ सर्वत्र प्रतिरथ्यं प्रतित्रिकम् ॥१६९॥
मन्त्रिसामन्तपुत्राश्च भ्रेमुस्तद्राज्यलिप्सया ।
पुरो द्विपस्य शृङ्गारैरिन्द्रसामानिका इव ॥१७०॥

पुरे भ्रान्तानि तान्यापुर्नैव राज्यधरं नरम् ।
मध्याह्नसमये जग्मुर्बाह्योद्यानादिवीथिषु ॥१७१॥
निदद्रौ देवपालोऽथ कस्यचित् शाखिनस्तले ।
यष्टिमुच्छीर्षके कृत्वा कम्बलाऽऽवृतविग्रहः ॥१७२॥
देवपालं समालोक्य नवाम्बुकणवर्षकः ।
करी जगर्ज गम्भीरं तडित्वानिव मूर्त्तिमान् ॥१७३॥
हेषां चकार वाल्हीकः कोकिलाध्वानसुन्दरम् ।
विस्वृतं पाण्डुरं छत्रमुत्फुल्लकमलोपमम् ॥१७४॥
जाह्नवीलहरीश्वेते चामरे चेलतुः स्वयम् ।
अभिषिच्य करीन्द्रेण न्यस्तः स्कन्धे विभुर्गवाम् ॥१७५॥
ततः सिंहरथेनाऽसौ महोत्सवपुरस्सरम् ।
तत्रैव वासरे पुत्र्याः कारितः पाणिपीडनम् ॥१७६॥
ततः सिंहरथो गत्वा नरेन्द्रो मुनिसन्निधौ ।
व्रतं जग्राह भावेन पूर्वोपात्ततमोऽपहम् ॥१७७॥
कृत्वा चतुर्विधाहारपरित्यागं महामुनिः ।
चतुर्थे देवलोकेऽसौ पूर्णायुष्कः सुरोऽभवत् ॥१७८॥
तदुपानत्कम्बलाद्यं गोपालैः श्रेष्ठिनो गृहे ।
अन्यैः समर्पितं गावः स्वयमीयुर्दिनात्यये ॥१७९॥
गोपाल इति कृत्वा तं सामन्ता नन्तुमीर्ष्यया ।
अहङ्काराद् न चाऽऽयान्ति जनाः पूजितपूजकाः ॥१८०॥
महाजनप्रधानोऽयमिति ध्यात्वा विशां पतिः ।
आजूहवज्जिनदत्तं नाऽऽययौ सोऽप्यवज्ञया ॥१८१॥
कम्बलादि निशाप्रान्ते सिंहद्वारे नरेशितुः ।
अवज्ञोपायनानीव जिनदत्तोऽप्यमोचयत् ॥१८२॥
तान्याऽऽलोक्य निदध्यौ स हहा! पूर्वविजृम्भितम् ।
तृणायाऽपि न मन्यन्ते धिग् मां राज्यर्द्धिभूषितम् ॥१८३॥

अश्व इत्यभिधेयम् ।

अहं खिद्ये कथंकारं येन दत्तमिदं पदम् ?।
स करिष्यति निःशेषं जनमाज्ञाविधायिनम् ॥१८४॥
ततोऽर्चयित्वा विधिवज्जिनेन्द्रमिति सोऽवदत् ।
कथं दत्तं त्वया राज्यं स्वामिन्! विप्लवकारणम्? ॥१८५॥
अथोचे व्यन्तरो भद्र! गजेन्द्रं मृत्तिकामयम् ।
विनिर्माय समागच्छेः समारुह्याऽत्र वन्दितुम् ॥१८६॥
द्विरदोऽस्मत्प्रभावेण त्वय्यारूढे चलिष्यति ।
आज्ञां करिष्यते सर्वस्ततस्तव निरन्तरम् ॥१८७॥
श्रुत्वेति भूपतिः प्राप प्रासादं मुदिताशयः ।
कुम्भकारा नृपादेशाच्चक्रुर्मृत्स्नामयं गजम् ॥१८८॥
इममारुह्य भूपालो वन्दितुं जिननायकम् ।
आगामीति ततो जज्ञे पुरे हास्यास्पदं महत् ॥ १८९ ॥
सामन्ता मन्त्रिणां पुत्राः पौरग्रामेयका अपि ।
तमवेक्षितुमाजग्मुः सर्वोऽप्यऽद्भुतकौतुकी ॥ १९० ॥
शुभेऽह्नि गजमारुह्याऽऽहूय तं श्रेष्ठिपुङ्गवम् ।
सभृङ्गारो महीपालः पश्चासने न्यवेशयत् ॥ १९१ ॥
व्यन्तरस्यानुभावेन करी मृत्स्नामयोऽचलत् ।
विसिष्मिये जनः सर्वः पश्यन् नवकुतूहलम् ॥ १९२ ॥
पुरात् स्वे निर्मिते गत्वा चैत्ये नत्वा जगद्गुरुम् ।
तमेव गजमारूढो नृपोऽगाद् निजमन्दिरम् ॥ १९३ ॥
आलानस्तम्भसम्बद्धं श्रेष्ठिन्नेनं गजं कुरु ।
इत्यादेशं महीभर्तुर्लब्ध्वा सो हर्षितोऽभवत् ॥ १९४ ॥
श्रेष्ठिना राजवत् तेन दत्ता कुम्भे शृणिक्षितिः ।
न चचाल पदं हस्ती वारित इव केनचित् ॥ १९५ ॥
वीक्षापन्नोऽभवच्छ्रेष्ठी तस्मादुत्तीर्य सत्वरम् ।
नृपपादाम्बुजं भक्त्याऽनमन्निदमुवाच च ॥१९६॥
गोपाल इति यत्कृत्वाऽपराद्धं भवतः प्रतिः ।

तत्क्षमस्व महीपाल ! पुण्यलक्ष्मीनिकेतन ! ॥ १९७ ॥
ततो देवानुभावेन निःशेषाः पृथ्वीभुजः ।
आज्ञां प्रपेदिरे तस्य शेषामिव नरेशितुः ॥१९८॥
शाश्वतार्हद्भवनानां सदृशं पृथिवीपतिः ।
तच्चैत्यं कारयामास स्वर्णस्तम्भमनोहरम् ॥१९९॥
श्वेतवस्त्रे परिधाय भक्तिमान् पृथिवीपतिः ।
पुष्पैरानर्च तीर्थेशं त्रिसन्ध्यं श्रेणिको यथा ॥२००॥
स्वचैत्ये कारयामासाऽष्टाह्निकादिषु पर्वसु ।
शासनोन्नतये राजा नाट्यं सूर्याभदेववत् ॥२०१॥
अन्यदा वन्दितुं देवमचलद् नगराद् नृपः ।
सार्द्धं मनोरमादेव्या शच्येव घनवाहनः ॥२०२॥
कौपीनवसनं क्षामं भारभुग्नशिरोधरम् ।
मनोरमा पुरोऽद्राक्षीद् व्रजन्तं काष्ठवाहकम् ॥२०३॥
तं विलोक्य मुमूर्छाऽऽशु देवी मोहपरायणा ।
अर्द्धविच्छिन्नशाखेव पपात पृथिवीतले ॥२०४॥
तथाविधापदि प्राप्तां दृष्ट्वा देवीं मनोरमाम् ।
वज्राहत इव क्ष्मापः कृच्छ्राद् वक्तुं प्रचक्रमे ॥२०५॥
यो यद् वेत्ति जनः सर्वः स तच्च कुरुतामिह ।
स्मर्तव्या व्यसनप्राप्ते विद्या मन्त्राधिदेवताः ॥२०६॥
वैद्याः प्राहुः पित्तमूर्छां दैवज्ञा ग्रहपीडनम् ।
मान्त्रिका देवतादोषमाप्ता मुद्गलविप्लवम् ॥२०७॥
प्रगुणं रचयामासुर्भिषजः शर्करादिकम् ।
दैवज्ञा विदधुः पूजां ग्रहाणां मन्त्रपूर्वकम् ॥२०८॥
देवतानां समारेभे पूजनं मान्त्रिकैरथ ।
मन्यन्ते नितरामाप्ता उपयाचितसंहतिम् ॥२०९॥
एकतश्च विरच्यन्ते शय्याः पङ्कजिनीदलैः ।
एकतश्चापि चूर्ण्यन्ते स्थूलमौक्तिकराशयः ॥२१०॥

